### आनन्दतीर्थभगवत्पादकृतः

# जयन्तीकल्पः

### आचार्य्यगोविन्दकृतया जयन्तीकल्पचन्द्रिकया समेतः




बेङ्गळूरु
2016

# **JAYANTĪ-KALPA** [In Samskṛt]

Of **Śrī-Ānandatīrtha-Bhagavatpāda (Ācārya Madhva)** with the Samskṛt commentary, **Jayantī-Kalpa-Candrikā,** by **Dr. Bannañje Govindācārya**.




| | |
|---|---|
| Published By : | **Dwaipāyana-Pratiṣṭhāna [R]**<br>#523, 2nd Main, 2nd Cross,<br>Malleshwaram, Bengaluru-560003<br>Cell: 99452 71641 |
| First Edition : | 500 Copies (2016) |
| Pages : | 96 |
| Price : | ₹ 100/- . $10 |
| Inside Artwork : | **Ujjvala-Nīlamaṇi, Ukraine (उक्रयीन)** |
| Cover Page Design : | **Śeṣagiri K. M.** |
| Typeset : | **Kaḍḍi Badarīnārāyaṇācār**<br>Pūrṇaprajña Vidyāpīṭha<br>Email: bnkaddi@gmail.com |
| Printers : | **Sri Anirudh Creations**<br>#144, 6th main, Gururaja Layout,<br>Bengaluru- 560028<br>Cell: 98800 77876<br>srikant.nsil@gmail.com |



प्रणतवान् प्राणिनां प्राणभूतं
प्रणतिभिः प्रीणये पूर्ण्णबोधम् ॥

# प्राकाशिकी प्रथमोक्तिः

शास्त्रीयग्रन्थानां प्रकाशनमेव नातिसुकरम् । तत्रापि सुतरां गैर्वाण्यां वाण्याम् । अथापि तादृशे साहसे बद्धदीक्षतया कृतजनुरिदं द्वैपायन-प्रतिष्ठानम् । प्रतनानामपूर्वग्रन्थानां कपाटोद्घाटनमिदम् । तस्येदं प्रथममुपायनं जयन्तीकल्पः सटीकः । तदिदमस्माकं भागधेयं मन्यामहे ।।

जयन्तीकल्पस्यैव प्रथमप्रकाशनेऽस्ति किञ्चित् बीजम् । धर्म्मशास्त्रज्ञै-स्तावत् कृष्णजन्माष्टमी जयन्ती च भिन्ने व्रते इति निरणायि । महानयं पण्डितानां प्रमादः । तमेतं पण्डितप्रमादमुत्सादयितुं जयन्तीजन्माष्टम्योः ऐकव्रतत्वं बोधयितुं भगवत्पादो जयन्तीकल्पाख्यं शब्दतस्तनुतरं अर्थतस्तु महत्तरं ग्रन्थं निरमिमीत ।।

अतीतानि सप्तशतानि वत्सराणाम् । महदिदं विस्मयपदं यन्न कोऽपि कोविदोऽस्य ग्रन्थरत्नस्य नितान्तचिन्तने कृतप्रयत्नः । श्रावणकृष्णाष्टम्यामेव कृष्णावतार इति धर्म्मशास्त्रज्ञानां प्रामादिकं निर्ण्णयमेव अनुसरन्तः कुम्भकर्ण्णन्तः सर्वेऽपि विस्मार्षुरेव भगवत्पादवचनम् ।।

तेन पञ्चाङ्गेष्वपि मठेष्वपि आचरणद्वैविध्यम् । एकेषामद्य जन्माष्टमी चेदपरेषामपरेद्युः । एवं कृष्णजन्माष्टमीतोऽपि बहूनां स्वप्रतिष्ठैव मुख्या बभूव । मुग्धा जनता तु इदमदो वोपादेयमिति निर्ण्णेतुमप्रभवन्ती उभावपि शपति ।।

कोऽत्र परिहारः? इति बहोः कालादियं नश्चिन्ता बाधमानाऽसीत् । जानीमः– 'दुराग्रहगृहीतत्वात् वर्तन्ते समयाः सदा' इति । अथापि ये न दुराग्रहग्रहग्रस्तास्तेषां कः पन्थाः? तेषां यथा तथ्यं विज्ञायेत, यथा चेयमाचार्य्य-कृतिरनास्थयाऽनाचरणेन वा मा स्म व्यर्था भवतु तथा प्रयतनीयमिति ॥

सम्प्रत्यपगता चिन्ता । अधिगतः पन्थाः । दिष्ट्या लब्धोऽस्माक-चार्य्यगोविन्दः । तमभ्येत्य चाभ्यर्थयाञ्चकृमहे–'एतावन्तं कालमलक्षितं जयन्तीकल्पं यथावत् व्याख्याय प्रकाशयतु भवान् । वयं तस्य प्रकाशने बद्धादराः' इति ॥

तत्रभवानाचार्य्यश्चिरं तपोऽतप्यत । तपस्तप्त्वा टीकामेतां रचयामास । तस्य कार्त्तज्ञ्यमर्प्पयाम इत्यल्पं वचः । केवलं भूयिष्ठां नमोवाकं प्रशास्महे ॥

द्वैपायनप्रतिष्ठानस्यायमोङ्कारः । प्रथमं पुष्पम् । नान्दीयं प्रकाशन-मालिकायाः । यदि महान्तोऽस्मानाशीर्भिः प्रोत्साहयेयुः, इतोऽप्यधिकस्य साहसस्य वयमीश्महे ॥

अस्य गणकयन्त्रेण लिप्यङ्कनकृत् श्रीलः कड्डीबदरीनारायणाचार्य्यः निर्व्याजसेवायै सप्रणति अभिनन्दनमर्हति । मुखपत्रकलाविन्यासकृतं श्रीलं के. एम्. शेषगिरिनामानम्, तथा मुद्रणकर्म्मणि सहकृतवन्तं श्रीलं कल्याणि श्रीकान्तनामानं च सहार्दमभिनन्दामः ॥

विशेषतः भगवतोऽद्भुतबालकस्य श्रीकृष्णस्याद्भुतं रेखाचित्रं विन्यस्य दत्तवते ऋषिक(रूसी)देशवासिने श्रीमते उज्ज्वलनीलमणये कलालोक-नायकमणये भगवान् सर्वाभीष्टं प्रदायानुगृह्णात्विति प्रार्थयामहे ॥

कल्याणनगरम् प्रतिष्ठानस्य कृते
(बेङ्गळूरु) **प्रकाशनसमितिः**

—०—

ॐ

रोहिण्यामर्द्धरात्रे तु यदा काळाष्टमी भवेत् ।
जयन्ती नाम सा ज्ञेया सर्वपापप्रणाशनम् ।
यस्यां जातो हरिः साक्षान्निशीथे भगवानजः ॥ १ ॥

तस्मात् तद्दिनमत्यर्थं पुण्यं पापहरं परम् ।
तस्मात् सर्वैरुपोष्या सा जयन्ती नाम वै सदा ।
द्विजातिभिर्विशेषेण तद्भक्तैश्च विधानतः ॥ २ ॥

यो भुङ्क्ते तद्दिने लोभात् पूयशोणितमत्ति सः ।
तस्मादुपवसेत् पुण्यं तद्दिनं श्रद्धयाऽन्वितः ॥ ३ ॥

कृत्वा शौचं यथान्यायं स्नानं कुर्य्यादतन्द्रितः ।
प्रभातकाले मेधावी योगायेति यथाविधि ॥ ४ ॥

नित्याह्निकं प्रकुर्वीत भगवन्तमनुस्मरन् ।
मद्ध्याह्नकाले च पुनः सायङ्काले त्वतन्द्रितः ।
स्नायीत पूर्वमन्त्रेण वासुदेवमनुस्मरन् ॥ ५ ॥

ततः पूजां प्रकुर्वीत विधिवत् सुसमाहितः ।
यज्ञायेति च मन्त्रेण श्रद्धाभक्तियुतः पुमान् ॥ ६ ॥

कृष्णं च बलभद्रं च वसुदेवं च देवकीम् ।
नन्दगोपं यशोदां च सुभद्रां तत्र पूजयेत् ॥ ७ ॥

अर्घ्यं दत्वा समभ्यर्च्याभ्युदिते शशिमण्डले ।
'क्षीरोदार्ण्णरसम्भूत अत्रिनेत्रसमुद्भव ।
'गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम' ॥ ८ ॥

दत्वाऽर्घ्यं मनुनाऽनेन उपस्थाय विधुं बुधः ।
'शशिने चन्द्रदेवाय सोमदेवाय चेन्दवे ॥ ९ ॥
'मृगिणे सितबिम्बाय लोकदीपाय दीपिने ।
'शीतदीधितिबिम्बाय तारकापतये नमः' ॥ १० ॥

उपसंहृत्य तत् सर्वं ब्रह्मचारी जितेन्द्रियः ।
विश्वायेति च मन्त्रेण ततः स्वापं समाचरेत् ॥ ११ ॥

ततो नित्याह्निकं कृत्वा शक्तितो दीयतां धनम् ।
सर्वायेति च मन्त्रेण ततः पारणमाचरेत् ।
धर्म्मायेति ततः स्वस्थो मुच्यते सर्वकिल्बिषैः ॥ १२ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादकृतो जयन्तीकल्पः ॥**

—०—

# इयमेका विज्ञप्तिः

जयन्तीकल्प इत्यणुतरा कृतिः। अर्थतस्तु महत्तरा। जयन्तीव्रतमागूर्य्य येये विप्लवाः, येये शङ्काशिवकास्तेषां सर्वेषां परिहारोऽयम्। येये विवादाः, असाधवश्च सम्प्रदायाः, तेषां सर्वेषां प्रत्याख्यानम्। जयन्तीविषये यद् वक्तव्यम्, यावद् वक्तव्यम्, तत्सर्वमत्र सम्भृतम्। 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्'। वामनोऽत्र त्रिविक्रमति॥

अथाप्यस्याः कृतेः अतीतेऽप्येतावतिथेऽनेहसि, न प्रावर्त्तैव समग्रा जिज्ञासा। इदमिदानीमुपक्रमितव्यम्– 'अथातो जयन्तीकल्पजिज्ञासा' इति। आचार्य्यकृतिषु तिथिनिर्ण्णयइव न्यासपद्धतिरिवेयमपि अलक्षितैव ताळवृन्तकोशेष्वज्ञातवासमनुभवन्ती वर्त्तते॥

विमर्शो न कृत एवेति न। केचिद् यथाप्रज्ञं विममृशुः। अथापि न मुक्ततया विममृशुः। सर्वोऽपि गान्धारीविमर्शः। पट्टिकापिहितचक्षुश्चिन्तनम्॥

प्राचीनैर्द्धर्म्मशास्त्रचिन्तकैः कृतं प्रमादं प्रमार्ष्टुमाचार्य्यः प्रकरणमिदं प्रबबन्ध। किन्तु हन्त, प्रतनानां प्रामदिकमेवार्त्थमभ्युपगम्य तदनुगुणतया आचार्य्यवचनानामेव विपर्य्यसने प्रयत्नः समजनि। स्वाशयानुगुणतया आचार्य्यवचनमेवाऽचकृषुः। अपचकृषुश्च मूलम्। अपचक्रुश्च मूलस्य। अहो अनेनोपजीव्यमेवोपजीवकं बभूव॥

नैतद् विस्मर्त्तव्यम्, यदा भगवत्पादवचनान्यधिजिगांसामहे– तत्वसर्वस्वस्य निर्ण्णयार्त्थमाचार्य्यस्य भूमावतरणम् । तद्वचनमेव चरमम् । स स्वयमेव प्रमाणम् । तदनुगुणतया समस्तस्मृतिपुराणानामर्त्थोऽवसेयो भवति । न त्वन्यस्मृत्यनुरोधेन आचार्य्यवचनानामन्यथाकरणम् । भगवता बादरायणेनापि सूचितमिदम्–'स्मृत्यनवकाशप्रसङ्ग इति चेन्न–' इति वदता ॥

आचार्य्येणापि क्रियासमभिहारेणाजागारि–'पुराणेषु मोहार्त्थानि च वचांसि भवन्ति । तदप्याचरणीयमिति भ्रमित्वा मा भूत मूर्खाः' इति ॥

भगवत्सङ्कल्प एव हि तादृशः । तथाहि स्मर्य्यते–

'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय' इति ॥

ये च पूर्वे धर्म्मशास्त्रचिन्तकाः प्रबन्धारश्च प्रायस्ते नाधीतमध्वाः । अविदित-भाषात्रयाः । अज्ञातमोहशास्त्रप्रक्रियाश्च । तस्मादविश्वसनीयनिर्ण्णयास्ते । द्वित्राः माध्वधर्म्मशास्त्रकारा अपि तत्पुच्छावलम्बिन इति दुष्षममिदम् । तन्नैतेषां निर्ण्णयमवलम्ब्य भगवत्पादवचनानामर्त्थनिर्ण्णयनं शक्य-सम्भवम् ॥

कथमथ निर्ण्णयः?

ताः स्मृतयः, तानि च पुराणानि प्रमाणतया स्वीक्रियन्ते, यान्याचार्य्यवच-नानुगुणानि । अथ यान्यननुगुणानि तानि मोहकानीति त्यक्तव्यानि । सोऽयमाचार्य्येणैव तत्वनिर्ण्णयाय दर्शितः पन्थाः ॥

विहाय सर्वान् पूर्वाग्रहान् परिशुद्धेन मनसा मध्वचरणौ शरणं व्रजेम । व्रजित्वा भगवत्पादकृपावतरणार्त्थं तथ्यस्फुरणार्त्थं निरीक्षेमहि । रागद्वेषौ दूरे तिरोदधीयाताम् । विज्ञायेतापि कथञ्चित् तदा भगवत्पादभावः ॥

* * *

सर्वाणि व्याख्यानानि, सर्वाश्च स्मृतीः पार्श्वे निधाय साक्षादाचार्य्यवचने चेन्मनः समाधीयते तदा कमिह सन्देशं लभेमहि? कस्मिन्नपि पक्षे विगताग्रहस्य तटस्थस्य सात्विकचिन्तकस्य कीदृशी अवगतिरत्र भवेत्? तादृशं प्रयत्नमत्राकरवाम । सन्त्येव प्रमादाः सर्वत्रापि सम्प्रदायेषु । सम्प्रदायप्रदस्याऽचार्य्यस्य कश्चिदन्यादृश एव सम्प्रदायः सम्मत इति । तस्यान्वेषणमिदम् । निरीक्षामहे— निर्म्मत्सराणां सतामिदमिष्टमुपहरणं स्यादिति ॥

* * *

अन्ते च, इदमेकमवधेयम् । अत्र मुद्रितः जयन्तीकल्पपाठः प्रचलितपाठादीषद् भिन्नप्रकारः । प्र.पाठे नामधेयमप्यन्यदेव जयन्तीनिर्ण्णय इति । अश्रद्धेयः प्रचलितपाठः । अत्र स्वीकृतस्तु पाठः भगवत्पादसाक्षाच्छिष्येण श्रीहृषीकेशतीर्त्थेन लिखितः परिशुद्धः पाठः । तस्मादयमधिकृततमः पाठः सर्वैरपि तत्वजिज्ञासुभिरवश्यमुपादेय इति शम् ॥

**दुर्मुख-श्रावण-कृष्ण-द्वितीया** **—डा॥ बन्नञ्जे गोविन्दाचार्य्यः**
**(20. 8. 2016)**

—०—

तमद्भुतं बालकमम्बुजेक्षणं
चतुर्भुजं शङ्खगदाद्युदायुधम् ।
श्रीवत्सलक्ष्मं गळशोभिकौस्तुभं
पीताम्बरं सान्द्रपयोदसौभगम् ॥

महार्हवैडूर्य्यकिरीटकुण्डल-
त्विषा परिष्वक्तसहस्रकुन्तलम् ।
उद्दामकाञ्च्यङ्गदकङ्कणादिभि-
र्विरोचमानं वसुदेव ऐक्षत ॥

## जयन्तीकल्पचन्द्रिका

**ॐ मध्वप्रतिष्ठितं श्री-**
**कृष्णं मध्वं च तत्प्रियतमं नत्वा ।**
**क्रियते तद्दिनशुद्ध्यै**
**साधु जयन्तीकल्पचन्द्रिका विमला ॥ ✻ ॥**

**जन्माष्टमी जयन्ती च प्राहुर्भिन्ने व्रते इति ।**
**धर्म्मशास्त्रविदः पूर्वे सर्वे कार्त्तान्तिका अपि ॥ ✻ ॥**

**अन्ववर्त्तत सा भ्रान्तिर्य्यावदाचार्य्यसम्भवः ।**
**तदुपज्ञं तन्निवृत्त्यै जयन्तीकल्पसम्भवः ॥ ✻ ॥**

**आचार्य्यभावमज्ञात्वा सम्प्रत्यपि च केचन ।**
**भिन्नव्रतत्वं मन्यन्ते तदर्त्थमयमुद्यमः ॥ ✻ ॥**

अथातो जयन्तीकल्पं व्याख्यस्यामः ॥

अणुतरा कृतिरियं जयन्तीकल्पः । अथापि महार्त्थगर्भितेति महाकृतिः । या पुनराविश्चकार कृष्णावताराचरणविषये ज्ञातव्यं समग्रं प्रमेयम्, निराचकार च तावन्तमनेहसमनुवर्त्तितं समग्रं भ्रमजातम् । यद्यस्ति दिदृक्षा, यद्युन्मीलितमान्तरं चक्षुः, यदि च मनीषा न दुराग्रहग्रस्ता, तदा वामनोऽत्र त्रिविक्रमति ॥

तथाहि नामनिर्वचनम्–अयं ग्रन्थः जयन्तीव्रतस्य इतिकर्त्तव्यतानिर्णायकः षडङ्गेष्वेकः कल्पः । तेन जयन्तीकल्पः । जयन्तीविधिरित्येतत् ॥

तेषां बहवः प्रभेदा भवन्तीति तेषां विकल्पा अप्यत्र निर्णीयन्त इति चायं जयन्तीकल्पः ॥

आ सूर्य्योदयादा चन्द्रोदयमष्टमीरोहिण्योर्य्योगे परिपूर्णा जयन्ती । तदयोगेऽप्यष्टमीरोहिण्योरेकदिवसस्थतया ईषदसमाप्ता जयन्त्यो भवन्तीति च कल्पप्प्रत्ययेन सूचयतीति जयन्तीकल्पः । ईषदसमाप्तो व्रतविशेष इति । तथाहि पाणिनिः–'ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः' (५. ३.६७) इति । ईषदसमाप्तः पण्डितः पण्डितकल्पः । पण्डितदेश्यः । पण्डितदेशीयः । न सामस्त्येन पण्डितः । यस्य पाण्डित्यमसमाप्तम्, असम्पूर्णमित्येतत् । अथापि पण्डिततुल्यः । नापण्डितेषु परिगण-नार्हः ॥

जयन्ती कल्पवृक्षइव सर्वाभीष्टप्रदेति च जयन्तीकल्पः । 'कल्पो न्याये सुरद्रुमे' इति यादवप्रकाशः । अथापि काम्यतया न करणीयेत्येष विधिः । जयन्ती इत्थमेवाऽचरणीयेति कल्पः क्लृप्तिर्य्यत्रेति च जयन्ती-कल्पः ॥

तस्माद् बह्वर्थमिदं नामधेयम्–जयन्तीकल्प इति । जयन्तीनिर्णय इति व्यत्यस्य पठन्तः शोचनीयाः ॥

***

प्रमादोऽयमधुनातनानां मौहूर्त्तिकानां धर्म्मशास्त्रविदुषां च –यदन्यस्मृत्य-नुरोधेन भगवत्पादवचनार्त्थं निर्णिनीषन्ते । नायं साधुः पन्थाः । अन्य-स्मृतीनामसामञ्जस्यं दर्शयितुमेव ह्यन्ते भगवत्पादेन निरणीयत । अन्ते

सिद्धस्तु सिद्धान्तः । तेन भगवत्पादवचनाविरोधेनैवान्यस्मृतीनां प्रामाण्यमुन्नेयम् । पाश्चात्यं हि वचनं पूर्वस्य बाधकम् । नतु पाश्चात्यस्य पूर्वम् ॥

अपिचाऽचार्य्यः स्वोक्तार्थे स्वयमेव प्रमाणम् । नेतरसंवादेन । तत्संवादेनान्येषां वचनानामुपादेयत्वम् । इममध्वानं पतद्भिरस्माभिरस्याः कृतेर्गूढार्थचिन्तने पुनरिदमुपक्रमं प्रायत्यत । अत्रास्ति स्वादु फलं निर्म्मत्सराणां सताम् ॥

इयमिह पीठिका–

कलियुगारम्भात् सार्द्धसप्ततिसमाभ्यः पूर्वम्, कस्याश्चिद् बहुलाष्टम्यां भगवान् वासुदेवोऽवततारेति स्थितम् । अधिगतः पक्षः । अधिगता तिथिः । मासस्तु मीमांस्यते । कस्य मासस्य बहुलाष्टम्याम्?

मार्ग्गमाणाः परिहारमार्ग्गं पुराणं शरणं ययुर्द्धर्म्मशास्त्रज्ञाः । अथाप्यनिर्ण्णय एव । तथाहि– कानिचन पुराणानि श्रावणमवतारमासमाचक्षते । कानिचन भाद्रपदमासम् ॥

तत्र श्रावणपक्षे संवादि वचनम्–

‘प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि ।
‘उत्पत्स्यामि–’ (वि.पु.५.१.७७) इति ॥

‘श्रावणस्य तु मासस्य कृष्णाष्टम्यां नराधिप ।
‘रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिः’ इत्यादि ॥
(पाद्म.उत्तरखं.३१.३२ )

अथ भाद्रपदपक्षे । तस्मिन्नेव पाद्मे खण्डान्तरे–

'भाद्रे मास्यसिते पक्षे चाष्टमीसञ्ज्ञिता तिथिः ।
'रोहिणीतारकायुक्ता रजनी घनघोषिता ।
'तस्यां जातो जगन्नाथः कंसारिर्देवकीसुतः' इति ॥
(पाद्मपु.ब्रह्मखं.१३.२१)

'भाद्रे मास्यसिताष्टम्यां यस्यां जातो जनार्द्दनः' इति ॥
(पाद्मपु.ब्रह्मखं.१२.९)

'मासि भाद्रेऽसिताष्टम्यां रोहिण्यामर्द्धरात्रके ।
'कृष्णो जातो यतस्तस्यां जयन्ती स्यात् ततोऽष्टमी' इति ॥
(अग्निपु.८३.१-२)

'सिंहराशिगते सूर्य्ये गगने जलदाकुले ।
'मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके ॥

'वृषराशिगते चन्द्रे ऋक्षे रोहिणसञ्ज्ञिते ।
'वसुदेवेन देवक्यामहं जातो जनाः स्वयम्' इत्यादि ॥
(भविष्यपु. उत्तरप.५७.१४-१५)

* * *

अथ किमिह निर्ण्णयसाधनम्, पुराणेष्वेवैवं सम्मुग्धवचनेषु?

कस्मिन् मास आचरणीयं कृष्णजन्माष्टमीव्रतम्? श्रावणमासे उताहो भाद्रपदे?

वस्तुतः कस्मिन् मासे कृष्णोऽवततार? श्रावणे आहोस्विद् भाद्रपदे?

केचित् परप्रत्ययनेयबुद्धयः सुकरं पर्य्यजिहीर्षन् –

'किमर्थो नः शिरःशूलः? सार्वत्रिकी प्रथा श्रावणे श्रीकृष्णप्रादुर्भाव इति। समग्रे देशे प्रसृतेयं पद्धतिः। किं वृथा विवादेन? तदेव वयमप्यनुसरामो निमील्य नयने। महाजना येन गताः स पन्थाः' इति ॥

बालिशं वचः। नोदतारि प्रश्नजलधिः। कुत इयं सार्वत्रिकी प्रथा? पुराणेषु दृश्यमाने द्विविधे व्यपदेशे धर्म्मशास्त्रज्ञा ज्यौतिषिका वा कथङ्कारं निरणेषत श्रावण एव कृष्णावतारः, न भाद्रपद इति? कोऽयं पक्षपातः श्रावणे? तदेतत् समाधातव्यं भवति ॥

तदर्थं गाढं विम्रष्टव्यं भवति। तदा लभेत परिहारः– यदयं श्रावणवादो धर्म्मशास्त्रज्ञानां प्रामादिकेन निर्धारेण लोके प्रसृतः। तदिदं बैत्रेण जलधितरणम्। अविमर्शमूलं याथाकथाचम् ॥

कः प्रमादः? नेत्रे निमील्य क्षणं चिन्त्यताम्। स्फुटं तदा प्रतिभायात् कः प्रमाद इति। इयं प्रमादोद्भवकथा–

पुराणगते द्विविधे व्यपदेशे तावदेकं स्वीकर्त्तव्यमिति निश्चप्रचम्। नहि द्विः कृष्णजननं सम्भवति। किं करणीयम्? कथं वा निर्णयनीयम्? महदिदं शिरःशूलं तानपीपिडत् ॥

किं भैषज्यमस्या रुजः? कथमनयोर्व्यपदेशयोरविरोधः स्यात्। कथं वा समन्वेतव्यम्– श्रावणबहुलाष्टम्येव भाद्रपदबहुलाष्टमी यथा स्यात्। कथं नु कर्त्तव्यम्? कः पन्थाः परिहारस्य? सर्वं विषमं प्रतिभाति ॥

सर्वे समेत्याकण्डूयन्त शिरः। सपदि तेषामेकमौषधं प्रतिबभौ। अहो परिहारः पुस्फोर। अगदोऽयमापद्बन्धुरिति तत्रैव दृढं ललाग

पण्डितमण्डली । अन्यदितोऽपि समीचीनं परिहारान्तरं स्यादित्यपि न तस्या मनस्यारुरोह ॥

कोऽयं परिहारः यस्तेषां प्रथमं प्रत्यभात्? चान्दमासस्य द्वेधा परिगणना शास्त्रेषु क्रियते– अमान्तो मासः पूर्णिमान्तश्चेति। अमान्तमासपक्षे या श्रावणबहुलाष्टमी सैव पूर्णिमान्तमासपक्षे भाद्रपदबहुलाष्टमी च भवति ॥

तेऽमन्यन्त । लब्धमुत्तरम् । गतं शिरःशूलम् । उदतारि प्रश्नजलधिः । पण्डिताः प्रमोदभरेण ननृतुरेव ॥

पूर्णिमान्तमासपक्षे भाद्रपदबहुलाष्टमी भवत्याश्वयुजबहुलाष्टमी। न जातु श्रावणबहुलाष्टमी। तेन नान्यः पन्था निर्णयनाय विद्यते। तस्मादयमेव पन्थाः साधीयानिति निरधारयन् ॥

हन्त, परिहारान्तरमपश्यन् पण्डितसमुदाय एतमेव पक्षमुररीचकार। तेन समग्रा भारतीयजनता इमां भ्रान्तिमेव साधुरयं सिद्धान्त इत्यन्ववर्त्तत । एवं स्थिते सात्विकजनकरुणया, तथ्यमाविश्चकार भगवत्पादः–

**रोहिण्यामर्द्धरात्रे तु यदा काळाष्टमी भवेत् ।**
**जयन्ती नाम सा ज्ञेया सर्वपापप्रणाशनम् ।**
**यस्यां जातो हरिः साक्षान्निशीथे भगवानजः ॥ १ ॥**

याजुषाणामियं षट्पदाऽनुष्टुप्। बह्वृचानां गायत्रीद्वयम्। अक्षरसङ्ख्यानेन जगती। अनुष्टुब्देवता च रोहिणी पत्या चन्द्रमसा सह। तावेव जायापती कृष्णावतारे जयन्तीत्वसम्पादकाविति मधुरं छन्दःसंयोजनम् । गायत्र्या च कृष्णस्यैव साक्षान्नारायणत्वमाह । जगत्या च द्वादशादित्य-

सम्बन्धिन्याऽयमेवोपेन्द्रो वामनात्मा चेत्याह । जगत्यां च सर्वच्छन्दो-मानिनीनां समाहारादयमेव सर्ववेदवेद्य इति च साङ्कच्यम् ॥

अन्यासु जन्मतिथिषु नर्क्षमवर्ज्जनीयम् । न तथा कृष्णावतारे । तत्र जन्मर्क्षमेव मुख्यम् । यतो रोहिणीयोग एव जयन्तीत्वं सम्पादयति । अत एव सरोहिणीकाय चन्द्रमसे च नियतमर्घ्यम् । अतो जन्मर्क्षं नियतमिति प्रथमं निर्दिदेश–**रोहिण्यां** सत्यामेवेति ॥

एतेनैदप्युक्तम्– सिंहमास एव काळाष्टम्यां रोहिणीयोगो भवति । तेन रोहिणीयोगो व्याप्यः । सिंहमासो व्यापकः । सिंहमासश्च श्रावणे वा स्यात् । भाद्रपदे वा । नियतः सिंहमासः । अनियतश्चान्द्रमासः । तेन सिंहमास इति सौराणां सम्प्रदाय इति न भ्रमितव्यम्– समानमेतदुभयेषाम्, सौराणां च चान्द्राणां च । अत एव 'रोहिण्याम्' इत्यनेनैव सिंहमासनैयत्यं सूचयन् भगवत्पादो वैकल्पिकं चान्द्रमासं न मुखतो निर्दिदेश । किन्तु 'यदा' इति सामान्यत एवाऽह ॥

तथाचायं श्लोकार्थः–'**यदा** श्रावणे भाद्रपदे वा, **यदा** यस्मिन् दिने, **रोहिण्यां** सत्याम्, **तु** विशेषतः **अर्द्धरात्रे काळाष्टमी भवेत्** **सा** तिथिः **जयन्ती नाम ज्ञेये**ति । तद्दिनं च **सर्वपापप्रणाशनमि**ति ॥

सोऽयं व्याप्यव्यापकभावः प्रकटमुद्घोषि विष्णुतीर्थीये–

'सिंहमासे तु रोहिण्या युतां कृष्णाष्टमीं पुमान् ।
'उपोष्य मद्ध्यरात्रे तु पूजयेन्नन्दनन्दनम्' इति ॥
(सन्यासप. ३.२०९)

तदिदं भ्रातुः सूत्रस्यानुजकृतं भाष्यम् । केचिदाक्षते–विष्णुतीर्थीयं केवलतौळवसम्प्रदायानुगुणमिति । महती भ्रान्तिरियम् । विष्णुतीर्थीयं

समग्रमाध्वानां धर्म्मशास्त्रम्। न तु स्मृतिमुक्तावल्यादिवदेकदेशस्य। अन्यथा जयन्तीकल्पोऽपि तौळवानां कृते कृत इत्यापतेत्। आह च विष्णुतीर्थः स्वयम्–

'श्रुत्वा गुरोः सम्यगेवार्त्थमेतं
'वक्ष्याम्यतः कर्म्मणि नात्र शङ्का' (१.६) इति ॥

ततोऽस्यैकदेशपरतां शङ्कमाना न केवलं विष्णुतीर्त्थायासूयन्ति । भगवत्पादाय च ॥

तथाचायं विष्णुतीर्त्थवचनार्त्थः– यतः सिंहमास एव रोहिणी-काळाष्टमीयोगः सम्भवी तस्मात् **सिंहमासे तु** सिंहमास एव **रोहिण्या युतां कृष्णाष्टमीं पुमान्** पुण्यवान् साधकः **उपोष्य मद्ध्यरात्रे तु** विशिष्य मद्ध्यरात्रे च, यदा कृष्णोऽवततार, **नन्दनन्दनं पूजयेदि**ति। नन्दन्त्येवेति नन्दा मुक्ताः । तानपि नन्दयतीति नन्दनन्दनो मुक्तानां परमा गतिः। सर्वाण्यपि भगवद्रूपाणि नन्दनन्दनानि। विशेषतः पुनरत्र व्रजजनानन्दनो नन्दगोपनन्दनो भगवान् श्रीकृष्णः ॥

'मद्ध्यरात्रे' इति पूर्वार्द्धान्वयीति स्वगोष्ठीनिष्ठं प्रलापमात्रम्। श्रुत्वेदृशं व्याख्यानं बालिशं भाषाशास्त्रविदः परिहसेयुः । अन्ततः विष्णुतीर्थस्य श्लोकरचने पाटवं नास्तीत्येवोक्तं भवति । अपिच तन्मते पूर्वार्द्धेऽपि कथमन्वयः? 'मद्ध्यरात्रे तु रोहिण्या युतां कृष्णाष्टमीम्' इत्यन्वयः पुना रोहिणीरहितां जन्माष्टमीमाचरतां प्रतिकूल एव । तस्मात् रोहिण्या युतामित्येतत् परित्यज्य 'मद्ध्यरात्रे' इति पदं दूरादाकृष्य प्राप्तामित्य-द्ध्याहृत्य व्याख्येयमित्यहो व्याख्यानकौशलम्। श्रुतपरित्यागः, अश्रुत-स्वीकारश्च प्रायस्तेषां शिरोभूषणम्। वस्तुतस्तु विष्णुतीर्थवचनं मध्ववचन-व्याख्यानरूपं स्फुटार्थं निरवकाशं चेति न तिरोहितं चक्षुष्मताम् ॥

ननु 'निशीथव्यापिनी या स्यात् सैवोपोष्याऽष्टमी भवेत्' इति सावधारणं निरवकाशं नः प्रमाणम् । न भोः । क्वचित् मोहकवचनानि पुराणानि भवन्ति । स्यादिदमपि मोहनार्थमिति सावकाशम् । अपिच बहून्य-ष्टमीव्रतानि भवन्ति पुराणेषु । अत्र जन्माष्टमीति नोक्तम् । तस्मात् साव-काशतरम् । जन्माष्टमीपरमेवेत्यङ्गीकारेऽपि, द्वयोस्तिथ्योरष्टमीयोगे निशीथव्यापिन्येव करणीया इत्यस्माकमेवानुकूलमिति सावकाश-तमम् । अपिच अनधिगतपूर्वोत्तरेण श्लोकार्द्धेन कथं निवकाशत्वं निर्णीयते ? समग्रः सपूर्वापरः श्लोकः प्रदर्श्यताम् । ततः परं सावकाशत्वं निरवकाशत्वं वा निश्चिनुमः ॥

अर्द्धं रात्रेरर्द्धरात्रः । मद्ध्यं रात्रेर्म्मद्ध्यरात्रः । 'रात्राह्नाहः पुंसि' (अ.सू.२.३.२९) इति हि पाणिनिः । यथा– अर्द्धरात्रः, मद्ध्यरात्रः, पूर्वाह्णः, मद्ध्याह्नः, द्व्यहः, त्र्यहः ॥

एतेन पुराणविरोधोऽपि पर्य्यह्रियत । यस्मिन् मासे रोहिणीयोगः स एव पुराणेषु श्रावणपदोदित इति । तेन श्रावण इति सौरश्रावण उच्यते । सिंहमास इत्येतत् । भाद्रपद इति चान्द्रो भाद्रपदः । तेन सर्वसमन्वयः । एवं यथाश्रुतस्वरसार्त्थसम्भवे किमिति वृथा पूर्णिमान्तोऽमान्त इति सम्प्रदायद्वैविद्ध्यं कल्प्यते । अगतिका गतिरेव सा । कल्पनागौरवं च । अत्र त्वस्ति स्वरसाऽन्या गतिः । सर्वपुराणानामैकरूप्यमिति लाघवं च । एतत्पक्षे सौरे श्रावणे नभसि वा, चान्द्रे भाद्रपदे नभस्ये वा भगवानवतीर्ण्ण इति । मेघैर्मेदुरं न भातीत्यम्बरं नभः । मेघैर्म्मेदुरमम्बरं न भात्यत्रेति श्रावणो नभाः । नह्यते मेघैरिति वैयाकरणाः । न नो हानिः । तदेतदुक्तं पुराणे– 'गगने जलदाकुले सिंहराशिगते सूर्य्ये' इति ॥

अथ कथं श्रावण इति सिंहमास उच्यते? पञ्चममासत्वसाधर्म्यात् । अत एव दाक्षिणात्या व्यपदिशन्ति सिंहमासं सोण इति । श्रावणाद्धि सोणसम्भवः । श्रवणां च तारकां श्रोणामाचक्षते वेदज्ञा अपि । तेन श्रावणः श्रोणमास इति स्फुटम् । प्रयोगश्च–'श्रोणायां श्रावणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः' इति वामनावतारे (भाग.८.१८.५) ॥

**श्रोणायां** श्रवणायां तारायाम्, श्रावणे सिंहमासे या द्वादशी तस्यां **प्रभुः** वामनः **प्रादुर्बभूव** इति पूर्वश्लोकेनान्वयः ॥

केचित् 'श्रवणद्वादश्याम्' इति पठन्ति । असाधुरयं पाठः प्रतिभाति । श्रोणायामिति पुनरुक्तेः । तथाच तत्र यथा श्रावण इति सिंहमासस्तथाऽत्रापीति सर्वं चतुरश्रम् ॥

न तत्र श्रावणः चान्द्रमास इति शक्यं वक्तुम् । भाद्रपदे हि वामनावतारः । नापि पूर्णिमान्तमासपरतयाऽपि योजना शक्यसम्भवा ॥

वङ्गा अप्येवमाचक्षते । तथाहि शब्दकल्पद्रुमः–'श्रावणश्च द्विविधः-सौरश्चान्द्रश्च । कर्कटस्थरविको मासः सौरश्रावणः । कर्कटस्थरविप्रारब्धशुक्लप्रतिपदादिदर्शान्तो मासश्चान्द्रश्रावणः । चान्द्रोऽपि द्विविधः– मुख्यो गौणश्च । मुख्यः पूर्वोक्तः । चान्द्रश्रावणीयकृष्णप्रतिपदादिपौर्णमास्यन्तो मासो गौणश्चान्द्रश्रावणः' इति ॥

अत्रेदमसङ्गतं निगमनं भाति– कर्काटकस्थरविको मासः सौरः श्रावण इति । सिंहस्थरविको मास इति वक्तव्यम् । उक्तं च ज्योतिषार्णवे–

'श्रावण्यां प्रौष्ठपद्यां वा यदा सिंहगतो रविः ।
'जयन्त्याराधनं कुर्य्यान्नतु कर्कटकन्ययोः' इति ॥

यत्र रोहिणीयोगः, यदा सिंहेऽर्कस्तदा श्रावण्यां प्रौष्ठपद्यां वा बहुलाष्टम्यां जयन्त्याचरणमित्यवगतम् । अथ द्वयोः कतरस्मिन् मासे कृष्णोऽवततार? यतरोऽवशिष्टस्ततरस्मिन् । श्रावणः सिंहमास इत्यगादि । ततोऽवशिष्टे भाद्रपद एव कृष्णावतार इति निश्चप्रचम् । तदेतदुक्तं भगवत्पादेन महाभारततात्पर्य्यनिर्ण्णये–

'यस्मिन्नब्दे भाद्रपदे स मासे सिंहस्थयोर्ग्गुरुरव्योः परेशः ।
'उदैत् ततः फाल्गुने फल्गुनोऽभूत्–' इति (१२.१२०) ॥

एतावन्तमर्त्थविशेषम्, 'रोहिण्याम्' इति त्रिभिरक्षरैर्न्निरूपयामास भगवत्पाद इति विस्मयावहमिदम् ॥

तदेतत् स्फुटीचकार–'सिंहमासे तु' इति भगवत्पादानुजः ॥

***

अथापि न निस्तारः । केचिदाचचक्षिरे– वयमिदानीं शङ्कापङ्के निमज्जिम । अवतारमासनिर्ण्णये द्वयीं गतिमशृणवाम । पूर्ण्णिमान्तमासपक्षस्त्वेकः । सौरः श्रावण इत्यपरः । तयोः कतरमेकतरं श्रेयांसं निश्चिनुमः । बहुजनसवादः पूर्वपक्षे लाभः । तस्मात् स एव स्वीकार्य्यः किं न स्यात्? न स्यात् । खलु वृथा चिन्तयित्वा । निर्णीतचरमेतत् । नहि शक्यं बहुजनसंवादेन निर्ण्णयः कर्त्तुम् । नायं राजकीयनिर्ण्णयः । तत् कोऽयं रोमन्थः? अमान्तः पूर्ण्णिमान्त इति मासद्वैविध्यकल्पने न किमपि समुचितं निमित्तमुत्पश्यामः, पण्डितमण्डलीमोहजननादृते । सौरश्रावणकथनेन तु महत् फलम् । सिंहेऽर्के रोहिणीयोगे सत्येव जन्माष्टमीव्रतमाचरणीयमित्यपूर्वं प्रमेयजातमाविष्कृतं भवतीति ॥

***

तथाचात्र त्रिप्रकारो जयन्तीकल्पो मुखत उक्तः– प्रथमपक्षे 'अर्द्धरात्रे' इति देहलीदीपति । अर्द्धरात्रे रोहिण्यां सत्याम्, अर्द्धरात्रे काळाष्टमी यदा भवेत् जयन्ती नाम सा ज्ञेया । अयं प्रथमः कल्पः ॥

द्वितीयपक्षे 'अर्द्धरात्रे' इति पूर्वमात्रान्वयि । अर्द्धरात्रे रोहिण्यां सत्याम्, तस्मिन्नेव दिने यदा काळाष्टमी भवेत् साऽपि जयन्ती नाम ज्ञेया । अयं द्वितीयः पक्षः ॥

तृीतयपक्षे 'अर्द्धरात्रे' इत्युत्तरमात्रान्वयि । यदा यस्मिन् दिने रोहिण्यां सत्याम्, अर्द्धरात्रे काळाष्टमी भवेत् साऽपि जयन्ती नाम ज्ञेया ॥

तिस्रोऽपि द्वेधा–श्रावणगा भाद्रपदगा इति । इदमपि **यदा** श्रावणे भाद्रपदे वेति सूचितम् ॥

तिस्रोऽपि पुनर्द्विविधाः– शुद्धा विद्धा इति ॥

यदा तिथिस्तारा चोदयव्यापिन्यौ सा शुद्धा । विद्धाः पुनस्त्रेधा–

कृत्तिकाविद्धाः, सप्तमीविद्धाः, उभयविद्धाश्चेति । रहिणीयोगेन सर्ववेध-परिहारः । इदमपि सूचितं भगवत्पादेन विद्धायास्त्याज्यत्वाकथनादेव । विद्धायां तिथौ तारायां वा जयन्त्याचरणाभावप्रसङ्गाच्च । कृष्णाष्टमीत्वं व्याप्यम्, जयन्तीत्वं व्यापकमिति जयन्तीकल्प इति नाम्नैव सूचितम् । अन्यथा कृष्णाष्टमीनिर्ण्णय इत्येवावक्ष्यत् ॥

तदुक्तं नारदीये–

'जयन्ती द्विविधा ज्ञेया विद्धा शुद्धेति सा द्विधा ।
'विद्धा तु सप्तमीयुक्ता शुद्धा तु नवमीयुता ।
'रोहिणी कृत्तिकायुक्ता विद्धा शुद्धा परान्विता' इति ॥

जन्मर्क्षस्य मुख्यत्वं च–

'तिथिरेकगुणा प्रोक्ता नक्षत्रं तु चतुर्ग्गुणम् ।
'कुर्य्यात् सर्वाणि कर्म्माणि जन्मनक्षत्रगे विधौ' इत्यादि ॥

***

एवं स्थितेषु जयन्तीप्रभेदेषु, 'अर्द्धरात्रे तु' इति तुना पुनर्ज्जयन्तीविशेषं सूचयामास भगवत्पादः । अयं चतुर्थो जयन्तीकल्पः । अर्द्धरात्रयोगे विशेषतो जयन्तीयम् । तदभावेऽपि जयन्ती भवत्येवेति विशेषवाचिना तुनाऽह । प्राशस्त्ये वा तुः । तदेतत् स्फुटमुक्तं विष्णुतीर्थीये–

'सिंहमासे तु रोहिण्या युतां कृष्णाष्टमीं पुमान् ।
'उपोष्य मद्ध्यरात्रे तु पूजयेन्नन्दनन्दनम्' इति ॥

तथाच सिंहेऽर्क्के कृष्णपक्षे यस्मिन् दिने अष्टमी रोहिण्या युक्ता भवति स चतुर्थो जयन्तीकल्पः । अर्द्धरात्रे इति गतम् ॥

अत्र कृष्णाष्टमी तिथिरिति उदयव्यापित्वं ज्ञायते । तेन उदयव्यापिन्यष्टमी, यदाकदा च रोहिणीत्येका विधा । उदयकाल एव तिथिनक्षत्रे उभे अपि सम्पृक्ते इत्यपरा ॥

***

तथाच निशीथव्यापिन्यौ रोहिणी च बहुलाष्टमी च, सौरः सिंहमासः, चान्द्रो भाद्रपदमासश्चेति सर्वमेतच्चतुष्टयं यत्र सङ्गतं स प्रथमो जयन्ती-कल्पः । सर्वयोगात् सम्पूर्णो जयन्तीकल्पः ॥

जन्मतिथिषु प्रायस्तिथेरेव प्राधान्यम् । रामनवमी वामनद्वादशीत्यादि । कृष्णजन्मदिने तु जन्मर्क्षस्य प्राधान्यम् । जयन्त्याख्यमहायोगसम्पाद-कत्वात् । श्रावणभाद्रपदयोरेकस्मिन् मासे बहुलाष्टम्यां रोहिणीयोगनैयत्यं

चैतदेव गमयति । नान्यत्रैवं नक्षत्रनैयत्यम् । अत एव रोहिण्यामिति प्रथममुल्लिलेख भगवत्पादः ॥

ननु कृष्णावतार एव जयन्तीयोग इत्यगादि । अत एव रोहिण्या नैयत्य-मिति च । कथं तर्हि नरसिंहजयन्ती वामनयजयन्तीत्यादि? नैष दोषः । नक्षत्रयोगेन जयन्तीत्वाभावेऽपि जयं तनोतीति निर्वचनेन सर्वाण्यपि जन्मदिनानि जयन्तीपदभाञ्जि भवन्तीति ॥

केचिद् रोहिणीनैयत्यवादिनोऽपि बुधवासरयोगं विशिष्टं मन्यन्ते । दर्शयन्ति च तादृशानि स्मृतिवचनानि । नेदं भगवत्पादसम्मतम् । अत एवाग्रजोऽनुजो वा न वासरमुल्लिलिखतुः । नहि क्वापि जन्मदिनेषु वासरपर्य्येषणा भवति । नहि रोहिणीयोगवद् बुधवासरयोगेन किञ्चिद् वैशिष्ट्यम् । नापि बुधवासराभावे व्रतस्य किञ्चिन्नैयून्यमित्याचार्य्याशयः ॥

एवं चतुर्विधासु जयन्तीषु सम्पूर्णाज्जयन्तीयोगाद् द्वितीय ईषन्न्यून इति जयन्तीकल्पः । 'ईषदसमाप्तौ कल्पप्–' (अ.सू.५.३.६७) इति पाणिन्युक्तेरित्युक्तम् । प्रथमापेक्षया ईषदसमाप्तिविशिष्टो जयन्त्याख्यो व्रतविशेष इत्यर्थः । ईषन्न्यूनता ईषदसमाप्तिः । द्वितीयादिषु न सर्वयोग इतीषन्न्यूनता। इयमीषन्न्यूनता तित्थ्यादियोग एव। न फले। यतस्तदिन-मपि **सर्वपापप्रणाशनम् ॥**

यस्मादेवङ्गुणविशिष्टायां कस्याञ्चिज्जयन्त्याख्यायामष्टम्यामेव **निशीथे** अर्द्धरात्र इत्यस्यैव विवरणम्, उदयात् पञ्चचत्वारिंश्यां घटिकायाम्, **भगवान्** सर्वसमर्त्थः, ऋतेऽपि भूमाववतरणात्, इच्छामात्रेण सर्वकरणसमर्त्थोऽपि, **अजः** स्वतः जननरहितोऽपि, अथच **अजः** सर्वगतोऽपि, अन्तःस्थित्वा सर्वप्रेरकोऽपि, 'अज गतिक्षेपणयोः' इति धातुपाठात्, 'क्षिप प्रेरणे' इति च, **साक्षात्,** बहिः सर्वगोचरः सन्, अथच **साक्षात्** स्वयमेव, नतु बलरामवदाविष्टतया, मधुरायां भक्तानुजिघृक्षया **जातः** अभिव्यक्तो बभूव

**हरि**रिति । संसारहरणात् **हरिः** । कंसादीनां संहरणाच्च **हरिः** । तेन भूभारहरणाच्च **हरिः** । सर्वलोकमनोहरणाच्च हरिः । पाण्डवादिसज्जन-लोकोद्धरणाच्च **हरि**रित्यादि ॥

पूर्वाभ्यां द्वाभ्यामपीषन्न्यून इति तृतीयः कल्पः । नैतावता फलेऽपी-षन्न्यूनता । तदपि दिनं **सर्वपापप्रणाशनम्** ॥

तृतीयादपीषन्न्यूनश्चतुर्थः कल्पः । अथापि न जयन्तीत्वभङ्गः । तस्मात् तद्दिनमपि **सर्वपाप्रणाशनम्** ॥

तदुक्तम्–

'रोहिण्या सहिता चैव सर्वाघौघविनाशिनी' इति ॥

'रोहिणीसहितां हित्वा योऽन्यस्यामाचरेत् क्वचित् ।
'स सर्वैः सुकृतैर्हीनस्तिर्य्यग्योनिषु जायते' इति ॥

'केवलेनोपवासेन तस्मिन् जन्मदिने मम ।
'सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः' इत्यादि च ॥

केचिदाक्षते– जयन्तीव्रतं नित्यं काम्यं चेति द्विविधम् । कामनया काम्यमपि स्यात् । अथापि काम्यतया न तत् करणीयम् । वैष्णवानां भगवत्प्रीत्यर्थं नित्यं कर्म्म तदिति सूचयितुं केवलं पापनिवृत्तिं फलमाह भगवत्पादः क्रियासमभिहारेण–**'सर्वपापप्रणाशनम्'** इत्युपक्रमे । **'पापहरम्'** इति मद्ध्ये । **'मुच्यते सर्वकिल्पिषैः'** इत्युपसंहारे ॥ १ ॥

यस्मात् तद्दिने साक्षाद्धरिर्ज्जातः–

**तस्मात् तद्दिनमत्यर्थं पुण्यं पापहरं परम् ।**
**तस्मात् सर्वैरुपोष्या सा जयन्ती नाम वै सदा ।**
**द्विजातिभिर्विशेषेण तद्भक्तैश्च विधानतः ॥ २ ॥**

**तस्मात्**। **अत्यर्थं पुण्यम्** पुण्यतमं पवित्रतममित्यर्थः। सर्वेभ्यः पाप्मभ्यः पुनातीति । तदेव स्फुटमाह– **परं पापहरम्** इति । सर्वश्रेष्ठं पापहरम् । व्रतेषु परमुत्तमम्, सर्वपापहरत्वादिति । धर्म्मसाधनत्वाच्च पुण्यम् । पान्तं न पातीति पापम् । धर्मो रक्षितारं रक्षति । पापं रक्षितारमेव न रक्षति, हिनस्तीत्येतत् । पापं पातकं हरति पातकिनं च हरति ॥

यस्मात् जयन्तीयोगयुक्तं **तद्दिनमत्यर्थं पुण्यम्, परं पापहरं** च **तस्मात् जयन्ती नाम सा,** कृष्णजयन्तीति प्रथितं तद्दिनमित्यर्थः, **सदा सर्वै-रुपोष्या**। सर्वैर्वर्णैः स्त्रीभिः पुम्भिश्च नियमेनोपोष्या। **'वै'** इति अनुपोषणे दोषश्रवणप्रसिद्धेरित्याह । तथाहि–

'कृष्णाष्टीदिने प्राप्ते येन भुक्तं द्विजोत्तम ।
'त्रैलोक्यसम्भवं पापं तेन भुक्तं न संशयः' इति ॥
'कृतघ्नस्य न लोकोऽस्ति जयन्तीविमुखस्य च' इत्यादि ॥

तत्रापि **द्विजातिभिर्विशेषेण**। तत्रापि विशिष्य **तद्भक्तैः**। तेषामाचरणस्य लोकसङ्ग्रहार्थत्वात् महत् सुकृतम् । अभक्तकृतमविधिना कृतं च ह्यकृतकल्पम् । तस्मात् विशेषतो विष्णुभक्तैः **विधानत** उपोष्या । एतद्ग्रन्थोक्तविधानतः । अन्यान्यग्रन्थेषु बहुधा विकल्पनात् पुराणेषु मोहवचनसम्भवात्, अस्य च निर्ण्णायकत्वात् । सच्छास्त्रोक्तविधानतो वा । तद्भक्तलक्षणं च पाद्मे–

'अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः ।
'मामेव शरणं प्राप्तास्ते मद्भक्ताः प्रकीर्त्तिताः' इत्यादि ॥ २ ॥

एकादश्युपवासवदिदं नित्यं कर्म्म। न नैमित्तिकं काम्यं वेति पुनः सावधारण-माह–

**यो भुङ्क्ते तद्दिने लोभात् पूयशोणितमत्ति सः ।**
**तस्मादुपवसेत् पुण्यं तद्दिनं श्रद्धयाऽन्वितः ॥ ३ ॥**

**यो भुङ्क्ते** । अन्न**लोभात्** । लुभ गार्द्ध्ये । गार्द्ध्यमभिकाङ्क्षा । बुभुक्षां निग्रहीतुमपारयन् । पुण्यलोभादप्यन्नलोभं बहुमानयन्नित्यर्थः । **पूय**मिश्रितं **शणितम्** । पूयमिति व्रणसम्भवं पूतिगन्धि शुक्लवर्ण्णविकृतं रुधिरम् । 'ಕೀವು' इति भाषायाम् । यथा कुक्कुरः स्वकायगतव्रणनिःसृतं पूयं शोणितं च स्वयं लेढि तद्वदयं नरकुक्कुर इत्यर्थः । भगवति **श्रद्धयाऽन्वितः** । आस्तिक्यबुद्धिः श्रद्धा । श्रीकृष्णः भगवतोऽष्टमोवतार इति **श्रद्धयाऽन्वितः** । तद्दिने भोजनं पूयशोणितादनसमम्, उपवासो भगवत्प्रीतिहेतुतयाऽवश्यं कर्त्तव्य इति **श्रद्धयाऽन्वितः** । आस्तिकः सात्विक इत्यर्थः ॥ ३ ॥

यत् **'विधानतः'** इति पूर्वश्लोकोक्तम्, तदिदानीं विधत्ते–

**कृत्वा शौचं यथान्यायं स्नानं कुर्य्यादतन्द्रितः ।**
**प्रभातकाले मेधावी योगायेति यथाविधि ॥ ४ ॥**

**कृत्वा शौचम् । यथान्यायं** यथा कर्म्मणामभ्रेषः स्यात् । यथोचितमित्येतत् । तत्तद्देशानुरूपम् । यच्च न्यायविदः समञ्जसं ब्रूयुः । **यथान्याय**मिति लौकिकविध्यनुसरणम् । **यथाविधी**ति शास्त्रीयविध्यनुसरणम् । भातुं प्रवृत्तं प्रभातम् । **प्रभातकाले** अरुणोदयवेलायां ब्राह्मे मुहूर्त्ते । **शौचं कृत्वा** बाह्यन्तःशुद्धिं सम्पाद्य । प्रातरुत्थाय आ हरिस्मरणात् आ दन्तधावनोत्तराचमनं स्नानात् पूर्वतनं सर्वमत्र शौचपदेनोच्यते । हरिस्मरणतुळसीसेकादिकमन्तःशुद्धिहेतुः । विसर्ग्गस्नानादिर्बाह्यशुद्धिहेतुः । समन्त्रमृत्तिकालेपादिरुभयशुद्धिहेतुः ॥

अथ यथान्यायं यथोचितमितीराण्यपि शौचानि भवन्ति । तद् यथा–

> ‘सत्यशौचं मनःशौचं शौचमिन्द्रियनिग्रहः ।
> ‘सर्वभूतदया शौचं जलशौचं तु पञ्चमम्’ इति गारुडे ॥
>
> अत्राऽद्यानि चत्वार्यान्तराणि । बाह्यं पञ्चमम्–
>
> ‘शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
> ‘मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिरथाऽन्तरम्’ इति च ॥

शौचकरणं यावज्जीवम् । विशेषतश्चास्मिन् जयन्तीदिने **शौचं कृत्वा** । सदा **अतन्द्रितः** सन् **स्नानं कुर्यात् यथाविधि** ॥

तद्रि अवसादे मोहे च । तन्द्रत्यनयेति तन्द्रा ईषन्निद्रा । यामाहुः ‘प्रमीला’ इति । ‘ಜೊಂಪು’ इति भाषायाम् । तन्मूलमालस्यं विषण्णता च । **अतन्द्रितः** करिष्यमाणेषु कर्म्मसु अनलसः, अक्लान्तश्च । कर्म्मकाले सर्वत्रोत्साहयुक्तः स्यादित्यर्थः । अतन्द्राऽस्य सञ्जातेति तारकादित्वादितच् । तारकादिषु तन्द्राशब्दः पठ्यते । अथापि तद्रिधातुं न पठन्ति पाणिनीयाः ॥

**यथाविधि** यथाऽस्माभिर्नित्यस्नानविधिः सदाचारस्मृतावुदितः, यथाच नारायणोपनिषदादिषु विहितम्, तथा स्नायात् । नहि जयन्तीप्रयुक्तः कश्चन विशेषविधिः । अथाप्यस्ति कश्चन । तमाह–**योगायेति** मन्त्रेण कृष्णं स्मृत्वा स्नायादित्यर्थः । तथा हि भविष्यपुराणे पठितो मन्त्रः– ‘**योगाय** योगपतये योगेश्वराय योगसम्भवाय श्रीगोविन्दाय नमोनमः’ इति ॥

सम्प्रति प्रचलितः पुराणपाठ ईषद्भिन्नः–‘योगेश्वराय योगसम्भवाय योगपतये श्रीगोविन्दाय नमोनमः’ इति । सम्प्रति तत्रतत्र महान् पाठ-भेदः । लिपिकृतः प्रमाद्येयुः । न महान्तः प्रबन्धारः ॥

तदेतत् सर्वं मनसि निधायाऽह–**मेधावी** शास्त्रविधिशुद्धपाठादिस्मृति-मान् । जन्माष्टमीविषये तद्दिनकरणीयविषये चाभ्रान्त इत्यर्थः । भ्रान्त्या अजयन्तीदिने जन्माष्टमीमाचरन्, अत्रोक्तादन्यथा वाऽवचरन् न फलभाग् भवेत्, प्रत्युतानिष्टभाजनं च स्यादित्यनेन जागरयति ॥

अथ मन्त्रार्थः । **योगाय–**

१. जननसमये जयन्तीयोगेनायमयुनगिति योगः ।

२. जननानन्तरं हित्वा मातरपितरौ यशोदानन्दगोपाभ्यां बल्लवबालै-र्बालिकाभिश्च युक्तो बभूवेति योगः ।

३. सर्वैः पदैरक्षरैर्घोषैश्च वाच्यतया युज्यत इति योगः ।

४. ज्ञानानन्दादिभिरनन्तगुणैर्युक्तो भवतीति योगः ।

५. अनन्तकर्म्मभिः, विशेषतश्च जन्मादिभिरष्टभिः, कर्त्तृत्वेन युक्तो भवतीति योगः ।

६. अनन्तदेशकालाभ्यां संयुक्तो भवतीति योगः ।

७. सच्चिदानन्दमयैरनन्तरूपैः स्वरूपभूतैर्युक्तो भवतीति योगः ।

८. षोडशसहस्रैः शतेन च भार्य्याभिर्युक्त इति योगः ।

९. रुग्मिणीसत्यभामाभ्यां श्रीभूमिभ्यां युक्त इति योगः ।

१०. विष्णोः षण्महिषीभिः कृष्णावतारे विशिष्य युक्त इति योगः ।

११. प्रद्युम्नसाम्बादिभिः पुत्रैरनिरुद्धादिभिश्च पौत्रैर्युक्त इति योगः ।

१२. बलभद्रगदादिभिर्भ्रातृभिः सहित इति योगः ।

१३. रामावतारे त्रिजटात्वेन कृतसीतासेवया अत एव भगवत्प्रीतिपात्रेण सुभद्रयाऽनुजया युक्त इति योगः ।

१४. कंससंहाराय मधुरां प्रत्यागतः पितृभ्यां देवकीवसुदेवाभ्यां पुनःसङ्गतो बभूवेति योगः ।

१५. यदुभिः पाण्डवैश्च बन्धुतयाऽयुज्यतेति योगः ।

१६. उद्धवाक्रूरादिभिर्भक्तैः सर्वैरृषिभिर्देवैश्च परिवृत इति योगः ।

१७. अर्ज्जुन एनं सारथ्ये न्ययुङ्क्तेति योगः ।

१८. धर्म्मराज एनं दूत्ये न्ययुङ्क्तेति योगः ।

१९. अर्जुनं सुभद्रया योजयामासेति योगः ।

२०. जननक्षणे मृतं परीक्षितं जीवनेन योजयामासेति योगः ।

२१. पाण्डवान् जयेन योजयामासेति योगः ।

२२. युज्यते हृदये भक्तैरिति योगः ।

२३. योजयति सर्वपुरुषार्थैरिति योगः ।

२४. विष्णोः सहस्ररूपेषु योगानामकमष्टादशम् । 'योगो योगविदां नेता' इति । तदभिन्नत्वात् कृष्णो योगः ।

२५. योगशब्दः कवचवचनः । भक्तानामयं योगइव रक्षाकवचइवेति योगः । 'योगः सन्नहनोपायद्ध्यानसङ्गतियुक्तिषु' इति वैजयन्ती ।

२६. ज्ञानरूपत्वाद् यः । उच्चत्वादुः । सर्वगतत्वाद् गः । यश्च उश्च गश्चेति कृष्णो योगः ।

२७. अयमेव योगः सर्वपुरुषार्थप्राप्त्युपाय इति योगः ।

२८. येन वायुना उच्चैर्ग्गीयते सामभिरिति योगः ।

२९. यमयति सर्वत उपरिगतः सन्निति योगः ।

३०. येन ब्रह्मणा वायुना च, उना उग्रेण शम्भुना च गीयते गम्यते चेति योगः ।

३१. यं वायुं ब्रह्माणं च, उं रुद्रं च सृष्टिविस्तारार्थं गच्छतीति योगः ।

३२. यौ ब्रह्मवायू, ऊ रुद्रः उरगः शेषश्च, गो गरुडश्च सन्त्यस्य परिवारभूता इति योगः ।

इत्यादयोऽर्थविशेषा यथायोगमनुसन्धेयाः । तस्मै **योगाय** ॥

**योगपतये–**

१. यौ ब्रह्मवायू, उः शम्भुः, तेषु योषु त्रिपुरुषेष्वयं गतः सन् जगत् पाति इति योगपतिः ।

२. यो ब्रह्मा, उः शम्भुः, तयोरन्तर्गतः सन् सृष्टिसंहारौ करोति, स्वयं विष्णुरूपेण पातीति योगपतिः ।

३. यौ ब्रह्मवायू, ऊ रुद्रः, तान् गच्छति नियन्तुमिति योगः अक्षरपुरुषः । लक्ष्मीरित्येतत् । तस्याप्येष पतिरिति योगपतिः ।

४. यश्च उश्च गश्च पतिश्चेति योगपतिः ।

५. पूर्वोक्तरीत्या योगश्चासौ पतिश्चेति योगपतिः ।

६. भक्त्यादियोगं पान्तीति योगपा योगिनः । तेषां तिरानन्दोऽनेनेति योगपतिः । 'तीत्यानन्दः समुद्दिष्टः' इति हि स्मरन्ति ।

७. ईः लक्ष्मीः, तया सहितः अः नारायणः यः । उच्चैर्गीयत उगः । पालकेषु ततः पतिरिति योगपतिः ।

८. यश्च उश्च गश्च पश्च तिश्चेति योगपतिः ।

९. योगपश्चायं तिरनन्दरूपश्चेति योगपतिः ।

१०. वेगेन यान्तीति याः । तेषु उत्तमः गः गरुडो योगः । तस्मिन् स्थितः पततीति योगपतिः । तस्मै **योगपतये** ॥

**योगेश्वराय–**

१. ज्ञानभक्तिकर्म्मयोगानामयमीश्वर इति योगेश्वरः ।

२. अष्टाङ्गयोगस्याप्ययमीश्वरः । 'योगेश्वरः कृष्णः' इति हि गीतासु ।

३. योगश्चायमीश्वरश्चेति योगेश्वरः ।

४. योगानां सर्वोपायानामयमीश्वर इति योगेश्वरः ।

५. जयन्तीयोगस्याप्ययमीश्वर इति योगेश्वरः ।

६. याविति ब्रह्मावायू, ऊ इति उग्रः, उरगः शेषश्च, ग इति गरुडः, तेषामयमीश्वर इति योगेश्वरः । तस्मै **योगेश्वराय ॥**

**योगसम्भवाय–**

१. उक्तदिशा योगश्च, सम्भवत्यस्माज्जगदिति सम्भवः । स्वयमेव कृष्णादिरूपेण सम्भवतीति च सम्भवः । योगश्चायं सम्भवश्चेति योगसम्भवः ।

२. योगश्चायम्, 'अकयप्रविसम्भूमसखहाः' इति सम्पूर्णगुणश्चेति सं चायम्, भवान्तर्य्यामितया भवश्चायमिति योगसम्भवः ।

३. भक्तियोगेन भक्तानां पुरः सम्भवति आविर्भवतीति योगसम्भवः । तस्मै **योगसम्भवाय** ॥

दिङ्मात्रमिदम् । अन्येऽप्यर्था यथास्फुरणमूहनीयाः ॥

**श्रीगोविन्दाय–**

१. गां जलं विन्दतीति गोविन्दः । मत्स्यः कूर्म्मश्च ।

२. गां भूमिं विन्दतीति गोविन्दो वराहः ।

३. गां स्वर्गं विन्दतीन्द्रोऽनेनेति गोविन्दो नरसिंहः ।

४. बलेर्गां भूमिं विन्दतीति गोविन्दो वामनः ।

५. दुष्टक्षत्रियान् निहत्य गां भूमिं विन्दतीति गोविन्दो भार्ग्गवः ।

६. रावणहननाय गां बाणं विन्दतीति गोविन्दो राघवः ।

७. विशेषतो गाः धेनूर्विन्दतीति गोविन्दः कृष्णः ।

८. एवं नानाविधावताररूपैः गां भूमिं विन्दतीति गोविन्दः ।

९. गाः सूर्य्यकिरणान् विन्दतीति गोविन्दः सूर्य्यनारायणः ।

१०. गाः वेदवचनानि विन्दत्यनेन सज्जनलोक इति गोविन्दो नाम भगवान् बादरायणः ।

११. गाः सर्ववचनानि, विशेषतः वेदवचनानि स्ववाचकत्वेन विन्दतीति गोविन्दः सर्ववेदवेद्यः ।

१२. नीळाविवाहे सप्त गोवृषान् विन्दति निग्रहीतुमिति गोविन्दः कृष्णः ।

१३. गोवर्द्धनोद्धरणे गवा कामधेन्वा पयसाऽभिषिच्य इन्द्रेण सह गवामिन्द्रस्त्वं गोविन्द इति संस्तुत इति गोविन्दः ।

१४. गवा कृष्णकेशेन कृष्णरूपम्, शुक्लकेशेन बलभद्र आविष्टतां च विन्दतीति गोविन्दः ।

१५. गवि चक्षुष्येनं विदन्ति ज्ञानिन इति गोविन्दः ।

१६. अरयः गोषु सर्वासु दिक्षु विन्दन्त्येनमिति गोविन्दो रामः । 'दिक्षु विदिक्षु रामः' इति हि स्मरन्ति ।

१७. गवि वज्रायुधे सन्निहितः सन् गौरिति नाम विन्दतीति गोविन्दः ।

१८. परितोमुखं गाः लोमानि विन्दतीति नरसिंहो हयग्रीवश्च गोविन्दः ।

१९. श्रियं रुग्मिणीत्वेनावतीर्ण्णां गां भूदेवतां सत्यभामात्वेनावतीर्णां च विन्दति भार्य्यात्वेनेति श्रीगोविन्दः ।

२०. प्रळयकाले श्रियः स्तुतिरूपां गां श्रुतिगीतां विन्दतीति श्री-गोविन्दः ।

'तथाहि गोशब्दात्र्थान् वर्ण्णयन्ति कोशकाराः–

'गौः स्वर्ग्गे च बलीवर्द्दे रश्मौ च कुलिशे पुमान् ।
'स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' इति मेदिनी ॥

२१. सहस्रनामसु १८७तमम् (गोविन्दो गोविदां पतिः), ५४२तमं च (महावराहो गोविन्दः) इति द्वे रूपे गोविन्दनामनी । तदभेदाच्च गोविन्दः ॥

तस्मै **श्रीविगोन्दाय** क्रियासमभिहारेण नमोनम इति । न मम न ममेति भगवति सर्वसमर्प्पणं नमःपदार्त्थः ॥ ४ ॥

**नित्याह्निकं प्रकुर्वीत भगवन्तमनुस्मरन् ।**
**मद्ध्याह्नकाले च पुनः सायङ्काले त्वतन्द्रितः ।**
**स्नायीत पूर्वमन्त्रेण वासुदेवमनुस्मरन्** ॥ ५ ॥

स्नानानन्तरं **नित्याह्निकं प्रकुर्वीत** । नित्यं नियतमाह्निकम् । अहनि प्रातः-प्रभृति सायान्तं निर्वर्त्यं कर्म्म आह्निकम् । **प्रकुर्वीत** । श्रद्धापूर्वकत्वं करणे प्रकर्षः । **भगवन्तमनुस्मरन्नि**ति भक्तिपूर्वकत्वमाह । शास्त्रानुगुणं सर्वस्वामित्वेन स्मरन् । न सर्वथा स्वाभेदेनेति । **मद्ध्याह्नकाले च पुनः स्नायीत पूर्वमन्त्रेण** 'योगाय–' इत्यनेन भगवन्तमनुस्मरन्नेव । अह्नो मद्ध्यं मद्ध्याह्नः । अह्नो मद्ध्यः कालः मद्ध्याह्नकाल इति वा । 'रात्र्यह्नाहाः–'

(अ.सू.२.४.२९) इत्युक्तम् । ष्णा शौचे । भावे स्नायते । ततो लिङ् । स्नायादित्यर्थः । सर्वमेतदात्मसौहित्याय, स्वधर्म्मत्वेन करणीयम्, न परार्थमित्यात्मनेभाषा प्रकुर्वीतेति, स्नायीतेति । स्नात्वा **च**कारेण नित्याह्निकं च प्रकुर्वीत इति चाऽह । माद्ध्यन्दिनं सन्ध्यावन्दनं पूजादिकं च । प्रत्यहं यत् कर्त्तव्यं तत् सर्वम् । सायङ्काले विशेषमाह– **सायङ्काले तु । स्नायीत** 'योगाय–' इति **पूर्वमन्त्रेण** विशेषतः **भगवन्तं वासुदेवमनुस्मरन्** । भगवान् मोक्षप्रदो वासुदेव एवायं वसुदेवतनयत्वेन जात इति । अनन्तगुणानुगुणं सहस्रनामभगवद्गीतादिभिरर्द्धरात्रपर्य्यन्तं स्मरन्निति च । **अतन्द्रितः** इति सर्वत्रान्वेति । **अतन्द्रितः नित्याह्निकं प्रकुर्वीत** । **अतन्द्रितः भगवन्तमनुस्मरन्** । **अतन्द्रितः स्नायीत** । **अतन्द्रित एव वासुदेवमनुस्मरन्** । श्रीकृष्णस्य मूलरूपाभेदचिन्तने सर्वथा तन्द्री न कर्त्तव्येति **सायङ्काले त्वतन्द्रित** इत्याह । नतु जामितया यान्त्रिकतया वाऽनुस्मरणमिति ॥ ५ ॥

**ततः पूजां प्रकुर्वीत विधिवत् सुसमाहितः ।**
**यज्ञायेति च मन्त्रेण श्रद्धाभक्तियुतः पुमान् ॥ ६ ॥**

**ततः** सायं करणीयनित्यह्निकानन्तरम्, कृष्णावतारसमये पुनः **पूजां प्रकुर्वीत** । पूजायाः प्रकर्षमेवाऽह– **विधिवदिति सुसमाहित** इति **श्रद्धाभक्तियुत** इति । उक्तं च विष्णतीर्त्थीये–'उपोष्य मद्ध्यरात्रे तु पूजयेन्नन्दनन्दनम्' इति । **विधिवत्** पुरषसूक्तेन षोडशोपचारविधिना । तत्र विशेषमाह– **'यज्ञाय–' इति मन्त्रेण च** । 'यज्ञाय यज्ञपतये यज्ञेश्वराय यज्ञसम्भवाय श्रीगोविन्दाय नमोनमः' इति मन्त्रेण सम्प्रार्थ्य्य, 'श्रीकृष्णावतारसमये सपरिवारस्याद्भुतबालकस्य श्रीकृष्णस्य पूजां करिष्ये' इति सङ्कल्प्येत्यर्थः । कोऽत्राधिकरोति– **सुसमाहितः** सुखेन अनायासेन सम्

भगवत्येव निहितमनाः । तदपि कुतः श्रद्धाभक्तियुतत्वात् । सर्वोत्तमो भगवानस्तीति विश्रम्भः श्रद्धा । स एव संसारसागरतरणहेतुरिति च । ततोऽतिशयिता भगवति भक्तिः । ताभ्यां युतः **पुमान्** । पुशब्दः पुण्य-वचनः । पुण्यवान् पुमानुच्यते स्त्रीजीवः पुञ्जीवो वा । पुण्यं मानयतीति वा । पातीति पुमानिति वैयाकरणाः । पातेर्डुम्सुन् प्रत्यय इति च । किं पातीति तैरपि वक्तव्यम् । पुण्यं पातीति गृह्यताम् । न व्यर्थप्रत्यया-स्तत्ववादिनः । नहि पुण्यविधुरः श्रद्धाभक्ती लभते । न समाधानम् । नापि कृष्णपूजायोगम् ॥

अथ मन्त्रार्थः । **यज्ञाय–**

१. इज्यते सर्वैरपि सर्वयज्ञैरपि सर्वदेवतानामभिरपीति विष्णुर्य्यज्ञः । 'यज्ञो वै विष्णुः' इति श्रुतिः । 'यज्ञेन यज्ञमयजन्त' इति च ।

२. यदस्ति तज्जानातीति यज्ञः ।

३. यजं यजनं नयतीति यज्ञः ।

४. याति च सर्वत्र जानाति च सर्वमिति यज्ञः ।

५. येन वायुना ज्ञात इति यज्ञः ।

६. यं वायुं जनयतीति यज्ञः ।

७. यं ज्ञानस्वरूपमात्मानं स्वयमेव जानातीति यज्ञः ।

८. आकूत्या यज्ञनामाऽवततारेति यज्ञः ।

९. यज्ञगत इति यज्ञः ।

१०. पाददेवतायां यज्ञे सन्निहित इति यज्ञः ।

११. सहस्ररूपेषु ४४७तमम् (यज्ञ इज्यो महीज्यश्च), ९७१तमं च (यज्ञो यज्ञपतिर्य्यज्वा) रूपं यज्ञाह्वयमिति तदभेदाद् यज्ञः ।

१२. 'ओ श्रावय' इत्याद्यासु पञ्चस्वाहुतिषु प्रथमाहुतिस्वीकर्ता यज्ञः। तदुक्तम्–

'यज्ञो यज्ञपुमान् नाम यज्ञेशो यज्ञभावनः।
'यज्ञभुक् चेति पञ्चात्मा यज्ञष्विज्यो हरिः स्वयम्' इति ॥

'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
'हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु' इति च ॥

'ओश्रावय' इति चतुर्भिः । 'अस्तु श्रौषट्' इति चतुर्भिः।'यज' इति द्वाभ्याम्। 'येयजामहे' इति पञ्चभिः। 'वौषट्' इति पुनर्द्वाभ्याम्। तस्मै **यज्ञाय** ॥

**यज्ञपतये–**

१. यज्ञानां पालनाद् यज्ञपतिः।

२. पञ्चरूपेषु द्वितीयं रूपं च यज्ञपुमानिति। तदभेदात् यज्ञपतिः। पातीति पतिः, पातीति पुमानिति निर्वचनसाम्यात्।

३. यज्ञदेवताया इन्द्रपुत्रस्यापि पतिः।

४. यज्ञश्चायं पतिश्चेति यज्ञपतिः।

५. यज्ञपानां तिरानन्दोऽनेनेति यज्ञपतिः।

६. यश्च ज्ञश्च पश्च तिश्चेति यज्ञपतिः।

७. सहस्रनामसु ९७२तमं (यज्ञो यज्ञपतिर्य्यज्वा)रूपं यज्ञपति-नामकम्। तदभेदाच्च यज्ञः।

८. यज्ञ इत्यग्निः, तत्पतित्वाद् यज्ञपतिः।

९. यज्ञ इतीन्द्रः, तत्पतित्वाद् यज्ञपतिः। यजन्त्यत्रेत्यग्निः, यजन्त्येनमितीन्द्रः।

१०. यज्ञो यजमानः, इज्यतेऽनेनेति । तत्पतित्वाद् यज्ञपतिः । तस्मै **यज्ञपतये** ॥

**यज्ञेश्वराय–**

१. यज्ञानामयमीश्वरः । उक्तं हि गीतायां भगवतैव–

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥

२. सोमाधिकारिणां यज्ञेशानां अयं वर इति यज्ञेश्वरः ।

३. यज्ञश्चायमीश्वरश्चेति यज्ञेश्वरः ।

४. पञ्चरूपेषु तृतीयं रूपं यज्ञेश इति । स एव यज्ञेश्वरः । तस्मै **यज्ञेश्वराय** ॥

**यज्ञसम्भवाय–**

१. आकूत्यां यज्ञनामा सम्बभूवेति यज्ञसम्भवः ।

२. ज्ञनयज्ञेन सम्भवत्याविर्भवतीति यज्ञसम्भवः ।

३. यज्ञाश्चानेन सम्भवन्तीति यज्ञवराहो यज्ञसम्भवः ।

४. यज्ञाश्चास्मिन्नर्पिताः समीचीना भवन्तीति यज्ञसम्भवः ।

५. यज्ञनामनीन्द्रपुत्रे पाददेवतायां सन्निहितो भवतीति यज्ञसम्भवः ।

६. यज्ञश्चायं सम्भवश्चेति यज्ञसम्भवः ।

७. महाव्रते यज्ञे विश्वामित्रानुग्रहाय इन्द्रे सन्निहितो भवतीति यज्ञ-सम्भवः ।

८. पञ्चसु रूपेषु चतुर्थं रूपं यज्ञभावन इति । निर्वचनसाम्यात् स एव यज्ञसम्भवः ॥

एवं यथसम्भवमत्र्थविशेषा अनुसन्धेयाः । ग्रन्थगौरवं मा भूदिति किञ्चिदेवोच्यते । ऊहकुशला जानीयुरेतावतैव । मन्दानाममन्दकथनेनापि न किञ्चित् फलम् । तस्मै **यज्ञसम्भवाय** श्रीगोविन्दाय नमोनमः ॥ ६ ॥

कथं पूजां प्रकुर्वीत ? तमद्भुतं बालकं सपरिवारं पूजयेदित्याह–

**कृष्णं च बलभद्रं च वसुदेवं च देवकीम् ।**
**नन्दगोपं यशोदां च सुभद्रां तत्र पूजयेत्** ॥ ७ ॥

**कृष्णं** तमद्भुतं बालकं प्रथमम् । ततः शुक्लकेशात्मना तस्य सन्निधानपात्रम्, अस्मिन्नवतरणेऽग्रजम्, मूलरूपे स्वतल्पम्, शेषावतारं **बलभद्रम्,** तत एतदवतारे मातरपितरौ, मूलरूपे अदितिकाश्यपौ **वसुदेवं देवकीं च,** ततः पोषणपितरौ, मूलरूपे द्रोणनामा वसुः, धराह्वया तत्पत्नी च, **नन्दगोपं यशोदां च**, ततः कृष्णभगिनीं देवकीतनयां **सुभद्रां च,** या रामावतारे रावणेनापहृतामशोकवनिकागतां सीतां निरुपधि सिषेवे, इत्येतान् सप्त पूजयेत् । पितृभ्या च पितृभ्यां च अग्रजेन च भगिन्या च सहैव पूजनं चात्र पूजाप्रकर्षः । **तत्र** श्रीकृणावतारसमये । **श्रीकृष्णाय नमः । बलभद्राय नमः । वसुदेवाय नमः । देवक्यै नमः । नन्दगोपाय नमः । यशोदायै नमः । सुभद्रायै नमः** । इति भविष्यत्पुराणोक्ताः पूजामन्त्राः । एवं नमस्कारपूर्वकं अर्घ्यादिषोडशोपचारान् समर्प्पयेत् । इति समग्रं पूजाविधानमनेनैकेन श्लोकेनाऽह ॥ ७ ॥

अथ चतुर्भिः कुलकेनानन्तरकर्त्तव्यं समग्रं सङ्गृह्याऽह–

**अर्घ्यं दत्वा समभ्यर्च्याभ्युदिते शशिमण्डले ।**
**'क्षीरोदार्ण्णरसम्भूत अत्रिनेत्रसमुद्भव ।**
**'गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम'** ॥ ८ ॥

**दत्वाऽर्घ्यं मनुनाऽनेन उपस्थाय विधुं बुधः ।**
**'शशिने चन्द्रदेवाय सोमदेवाय चेन्दवे ॥ ९ ॥**
**'मृगिणे सितबिम्बाय लोकदीपाय दीपिने ।**
**'शीतदीधितिबिम्बाय तारकापतये नमः' ॥ १० ॥**

**उपसंहृत्य तत् सर्वं ब्रह्मचारी जितेन्द्रियः ।**
**विश्वायेति च मन्त्रेण ततः स्वापं समाचरेत् ॥ ११ ॥**

पूजितानां तेषां सर्वेषा**मर्घ्यं** जलाञ्जलिं **दत्वा** । अर्ह्यतेऽनेनेत्यर्घः । अर्ह पूजायाम् । अर्घः पूजाविधिः पूजा वा । पूजार्त्थं दीयमानं जलमर्घ्यम् । 'अर्घः पूजाप्रतिक्रयौ' इति यादवप्रकाशः । 'पादार्घाभ्यां च' (अ.सू. ५.४.२५) इति तादर्त्थ्ये यत् । अर्घ्यमिति हस्तावनेजनमप्युच्यते । अत्र त्वर्घ्यमिति जलाञ्जलिः । अर्घिधातुरपि पुरा पठित आसीदिति ज्ञायते । अत एव भारते 'कलां नार्घन्ति षोडशीम्' इत्येव पाठं पेठुः काश्मीरदेशे । तदा त्वर्घ्यत इत्यर्घ इत्येव । अर्हतेः सञ्ज्ञायाम् घञ् इति पाणिनीयाः ॥

केन मन्त्रेणार्घ्यं दत्वा? अत्रेदमनुसन्धेयम्–

भगवत्पादोऽत्र चन्द्रार्घ्यमन्त्रमाह । चन्द्रपूजामन्त्रमाह । न कृष्णार्घ्य-मन्त्रम् । यस्य जयन्तीनिर्ण्णयार्त्थमयं ग्रन्थः प्रवृत्तः तस्यार्घ्यमन्त्रमेव किमिति नोवाच?

अत्र केचिदिमं श्लोकद्वयमर्घ्यमन्त्रमाहुः–

'जातः कंसवधार्त्थाय भूभारहरणाय च ।
'कौरवाणां विनाशाय दैत्यानां निधनाय च ॥

'पाण्डवानां हितात्र्थाय धर्म्मसंस्थापनाय च ।
'गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे' इति ॥

नायमाचार्य्यसम्मतः कृष्णार्घ्यमन्त्रः । केवलं देवकीसहिताय कृष्णायार्घ्यमत्र मन्त्रे विधीयते । यस्मात् कंसवधात्र्थं जातस्तस्मादिदमर्घ्यं दीयत इति साकाङ्क्षता च । तस्मान्नायं मन्त्र इह समुद्धृतः । नपि भविष्यत्पुराणे पठ्यते । तर्हि केन मन्त्रणेति वक्तव्यम् । अन्यथा न्यूनता स्यात् । चक्षुषी उन्मील्य दृश्यताम् । अर्घ्यमन्त्रोऽपि सूचित एव भगवत्पादेन । यथा **'कृष्णं च–'** इत्यादिना पूजामन्त्र उदितस्तथा तेषामर्घ्यमन्त्रोऽप्युदित-प्राय एव– **'बलभद्रवसुदेव-देवकीनन्दगोपयशोदासुभद्रासहिताय श्रीकृष्णाय इदमर्घ्यम्'** इति । पृथक् साहित्यवचनेन वा–**'बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय इदमर्घ्यम्'** इति । उभयथाऽपि न दोषः ॥

**'अर्घ्यं दत्वा'** इति स्फुटवचनात् सकृदेवार्घ्यमिति भाति । त्रिरर्घ्यमिति रामानुजीयाः । 'जातः कंसवधात्र्थाय–' इति मन्त्रोऽपि रामानुजीय-सम्प्रदायागतः । मूलपाठमजानद्भिरर्वाचीनैः तच् श्लोकद्वयं जयन्ती-कल्पेऽपि प्राक्षेपि । स प्रमाद एव । पूर्वं चन्द्रार्घ्यं पश्चात् कृष्णार्घ्यमिति रामानुजीयाः । अत आह– कृष्णाय **अर्घ्यं दत्वे**ति ॥

अथ **'कृष्णाय नमः–'** इत्यादि पूर्वोक्तपूजामन्त्रेण पुनः **समभ्यर्च्च्य** । सम्यगजामितया अभितः अर्घ्यसमन्तरमेव अविलम्बेन अर्च्चित्वा । अथच सम् श्रीकृष्णं अभितः परिवारान् बलभद्रादींश्च अर्च्चयित्वा । अथच 'अर्च्च गतौ' इति प्राचीनो धातुपाठः । सम्यग् भगवन्तं श्रीकृष्णं **अभ्यर्च्च्य** मनसा अभिगम्य । अर्च्चनं तुळस्या बिल्वपत्रैर्वा । कृष्णप्रिया हि तुळसी । बिल्वपत्रे श्रीर्वसतीति तदपि कृष्णप्रियम् । 'वनस्पतिस्तव वृक्षोऽथ बिल्वः' इति श्रुतेः । यदि बिल्वपत्रैरर्च्च्यते तदा रुग्मिणी स्वयमागत्य भर्त्तारम-र्च्चयतीव ॥

अथ **चाभ्युदिते शशिमण्डले** शशिनेऽर्घ्यं **दत्वे**त्यन्वयः । अर्द्धरात्रे, सूर्योदयादारभ्य पञ्चचत्वारिंश्यां घटिकायाम्, भूमौ कृष्णचन्द्रोदयः । अथ प्रायः षट्चत्वारिंशद्घटिकातः परं गगने चन्द्रोदयः । कृष्णावतारकाले त्वेवं स्थितिरासीत् । अन्यत्र विद्धजयन्त्यादिषु पूर्वमपि स्याच्चन्द्रोदयः । तेनानियतं पौर्वापर्य्यम् । अर्घ्यं तु नियतमेव पश्चात् । एवं कृष्णार्घ्याभ्यर्च्चनाभ्यां परस्तात् चन्द्रोदये सति रोहिणीसङ्गमेन जयन्तीयोगसम्पादकस्याप्यर्घ्यं दद्यात् , उपतिष्ठेत चेत्यर्थः । नच 'चन्द्रोदये जयन्ती स्यात् केशवाराधनं परम्' इत्यादिविरोधः । क्वचित् चन्द्रोदये सति, क्वचिदासन्ने चेत्युभयसाधारण्याय हि तथोक्तिः ।।

रोहिणीयोगेन अभ्यधिक उदयोऽभ्युदयः । अभ्यर्ण्णमुदयश्च अभ्युदयः । अर्द्धमण्डलमपि मण्डलमित्युच्यते । भ्रूमण्डलं धनुर्म्मण्डलमिति यथा । मण्डयति गगनमितिमण्डलम् । शशाकारच्छायायुक्तत्वान्मण्डलं शशि । तदभिमानित्वाच्चन्द्रमा अपि शशी । तस्य मण्डलम् । **शशिमण्डले** आशु **उदिते** सति ।।

अथ चन्द्रार्घ्यमन्त्रमाह– **क्षीरोदार्ण्णवसम्भूत** । चन्द्रमाः प्रथमं भगवतो मनसोऽजायत । तत इन्द्रियाभिमानी सन् पद्मसम्भवादजायत । तदस्य द्वितीयं जन्म । ततः शिवादुमायामजायत । तदस्य तृतीयं जन्म । ततः इन्द्रादजायत । तदस्य तुरीयं जन्म । ततः क्षीरोदादजायत । तदेतत् पञ्चमं लक्ष्म्या सह जननमत्र स्मर्य्यते–**'क्षीरोदार्ण्णवसम्भूत'** इति । क्षीरमेव यस्योदकं तस्मिन्नर्ण्णवे सम्भूतो जातः । ततोऽत्रिनेत्रात् दृष्टिपातमात्रेणानसूयायामजायत । तदस्य मनुष्यलोके षष्ठं जन्म । सम्यक् मनुष्यलोकदृश्यतया, ब्रह्मसन्निधानेन, विना स्त्रीपुंसयोगं जातत्वेन च उत्कृष्टः भवः । सम्बोधनत्वादुभयोर्विश्लिश्य पठनम् ।।

यद्यपि मण्डलं शशाङ्कम् । तद्देवतात्वेन चन्द्रमा अपि तत्पदेनोच्यत इति पुरस्तादेव प्रास्तावि ॥

यस्मात् त्वं रोहिण्या सङ्गतः कृष्णजनने जयन्तीयोगं समपादयः, तस्माद् **रोहिण्या सहितः** सन् **मम** प्रीतिसम्पृक्तं **इदमर्घ्यं** जलाञ्जलिं **गृहाण** । **अनेन** मन्त्रेण **'रोहिणीसहिताय चन्द्रमस इदमर्घ्यम्'** इति **अर्घ्यं दत्वा** । अनेन वक्ष्यमाणेन **मनुना** तं **विधुमुपतिष्ठेत** । **'मनुनाऽनेन'** इति पूर्वान्वयि चोत्तरान्वयि चेति द्योतयितुं पादयोर्विश्लिष्य पाठः ॥

विधुपदेन चेदमाह– विधुरिति मुख्यतो विष्णुरुच्यते विधिमपि विधत्त इति । 'विधुर्निशाकरे विष्णौ–' इति यादवप्रकाशः । विष्णुरेवायं विशिष्य लीलया धयते यशोदास्तनमिति शिशुः कृष्णोऽपि विधुः । धेट् पाने । तेन विधोरर्घ्यप्रदानमुपस्थानं च मुख्यतो भगवतः कृष्णस्यैव । चन्द्रान्तर्गतस्य धन्वन्तरेश्च ॥

अत एवोभयत्रापि शङ्खेन जलाञ्जलिमुशन्ति । शङ्खं हि श्रियः प्रतीकम् । 'श्रीरिति यां वदन्ति (सा) सत्वात्मिका शङ्खम्' (म.भा.ता.नि.३.७५) इति भगवत्पादवचनम् । तेन कृष्णार्घ्यप्रदाने स्वयं श्रीरेव जलाञ्जलिना भर्तारं प्रीणयतीति मधुरमनुसन्धानम् । चन्द्रार्घ्यप्रदाने तु स्वयं भगिनी श्रीरेव भ्रातरं चन्द्रमसमुल्लाघयतीति ॥

क्षीरेण चन्द्रार्घ्यमित्येके । तदपि नारिकेळखण्डे देयमित्यपरे । नारिकेळफलरसेनेति रामानुजीयाः । नैकमप्यचार्य्योक्तमिति केवलेन जलेनेत्येव सूक्तम् ॥

***

अथ विधिरेव विधुः । तृतीयोऽतिशये । चतुर्म्मुखस्य विशेषसन्निधानपात्रं हि चन्द्रमाः । तेन यद्विधवेऽर्घ्यं प्रदीयते, यच्च विधुरुपस्थीयते तत्

मुख्यतश्चतुर्म्मुखस्योपस्थानं चार्घ्यप्रदानं च । तेन विधावुपस्थिते भगवतः साक्षात्पुत्रः प्रथमः प्राणो विधिरपि सभाजितो भवति । तदधिष्ठानतया हि चन्द्रस्य जननम् । तदिदं प्रमेयजातं भगवत्पादः **'विधुम्'** इति द्वयोरक्षरयोः सञ्जग्राह ॥

'अनसूया तथैवात्रेर्ज्जज्ञे पुत्रानकल्मषान् ।
'दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्'

इति भागवतवचनम् ॥

तथाचार्घ्यमन्त्रस्य भगवत्परता–

भगवान् नारायणः क्षीरोदार्ण्णवे तत्रापि श्वेतद्वीपे मुक्तैः सङ्गतो बभूवेति क्षीरोदार्ण्णवसम्भूतः । क्षीरोदार्ण्णवश्चानेन सम्भूतः । अत्रिनेत्राभ्यामनसूया-दर्शनमात्रेणायं दत्तनामा समुद्भवः । शशः शशम् । आधिक्ये द्विरुक्तिः । 'मन्दम्मन्दम्' इतिवत् । आनन्दातिशयः अङ्कः लक्षणमस्येति शशाङ्कः । अकि लक्षणे । आनन्दमय इत्येतत् । जननकाले रोहिणीयोगेन सहितः । अथच– न केवलं देवकीयशोदादिभिः बाह्लीकतनयया बलभद्रजनन्या रोहिण्या च सहितः । तेन कृष्णस्य बलभद्रस्य सुभद्रायाश्च सर्वा अपि मातरोऽभिनन्दिता भवन्ति । सुभद्रा हि देवकीतनया । रोहिणी च तस्य उपमाता । ततस्तस्या विशेषतो ग्रहणम् । तथाहि भगवत्पाद-वचनम्–

'जाता देवक्यां सा सुभद्रेति नाम्ना
'भद्रा रूपेणाऽनकदुन्दुभेस्ताम् ।
'कृत्वा पुत्रीं रोहिणी स्वामरक्षत्
'पूर्वं तु याऽऽसीत् त्रिजटैव नाम्ना' इति ॥

(म.भा.ता.नि.२०.३७)

तेन सुभद्रा रौहिणेयी च । अहो रामकृष्णावुभावपि रौहिणेयौ ॥

***

अथ क उपस्थानमन्त्रः? आह– **शशिने चन्द्रदेवाय** । उक्तन्यायेन शशि चन्द्रमण्डलम् ।तदभिमानितया चन्द्रः शशी । 'अभिमानिव्यपदेशस्तु–' इति हि भगवद्वचनम् । तदेव स्फुटमाह– **चन्द्रदेवाय** । चन्दतीति आह्लाद-कत्वाच्चन्द्रं मण्डलम् । तदभिमानिने देवाय । सूते चन्द्रिकामिति, सौम्यकान्तित्वाच्च सोमं मण्डलम् । तदभिमानिने देवाय । उनत्ति क्लेदयति तुषारकणैर्वनान्तमितीन्दुः । उन्दी क्लेदने । 'उन्देरिच्चाऽदेः' इति वैया-करणाः । इन्धे इति वा इन्दुः । धस्य दः । ञि इन्धी दीप्तौ । शशाख्यो मृगोऽस्त्यस्याङ्कत्वेनेति मृगी । सितो धवळोऽस्य बिम्बः । निशायां लोकं दीपयन्नाकाशदीपोऽयम् । लोकाय अवलोकाय वा निशादीपोऽयम् । भगवान् दीपकोऽस्येति दीपी । 'यच्चन्द्रमसि–' इत्यादेः । शीतदीधिति-र्बिम्बोऽस्य । सप्तविंशतेस्तारकाणां पतये । विशेषतश्च रोहिण्याः पतये नमः । 'तारका ज्योतिष्युपसङ्ख्यानम्' (७.३.४५) इति वार्त्तिकम् । तत इत्त्वाभावः । इत्यनेन मन्त्रेण **विधुमुपस्थाय** पूजयित्वा । मुख्यत-श्चन्द्रान्तर्गतं धन्वन्तरिम्, अत्रिनेत्रोद्भवं दत्तं वा पूजयित्वा । अत एव च साळग्राम एव प्रायश्चन्द्रोपस्थानं तुळस्या बिल्वपत्रैर्वाऽर्चनमिति सम्प्रदायः ॥

यथा मण्डलमानी चन्द्रो मन्त्रार्थः, न मण्डलम्, ततोऽपि मुख्यतया चन्द्रान्तर्यामी तत्तत्पदवाच्य इति स्थितम् । अथापि किञ्चिदिव निर्वचनं निरूप्यते । तथाच भगवत्परतया मन्त्रार्थः– शशं परमानन्दः अस्यास्तीति शशी । चन्द्रमप्ययं देवयति । दिवु द्युतौ । सोमस्य चन्द्रस्य शिवस्य पवमानस्य चायं नियन्ता देवः । इष्टं दातुं शीलमस्येतीन्दुः । वृन्दावन-गमनार्थं वृकाख्यान् मृगविशेषान् ससर्जेति मृगी । तथा ह्युक्तम्–

‘वृन्दावनयियासुः स नन्दसूनुर्बृहद्वने ।
‘ससर्ज्ज रोमकूपेभ्यो वृकान् व्याघ्रोपमान् बले’ इति ॥
(म.भा.ता.नि.१३.२६)

मृगसम्बन्धिमुखमस्येति मृगी, वराहः नरसिंह हयमुखश्च । स्यमन्तकमणेः मृगः मृगणा । तद्वान् मृगी । मृग अन्वेषणे । योगिभिमृग्यते स्मेति मृगितो मृगी । सितः केशः बिम्बं लक्ष्म यस्य बलभद्राविष्टः कृष्णः । असितः केशः बिम्बं यस्येति वा । ज्ञानिभिर्हृदये सितं बद्धं बिम्बं प्रतीकं यस्य । सितमवसितं बिम्बं यस्य । सितश्चासौ सर्वेषां बिम्बभूतश्च । लोकानयं दीपयति । लोकाश्चैनं दीपयन्ति । प्रतिमन्दिरं दीपा अस्य सन्तीति दीपी । दीपयत इति पुष्पवन्तौ दीपौ । तावस्य स्त इति दीपी । आकाशं दीपयन्तीति नक्षत्राणि दीपानि । तान्यस्य सन्तीति दीपी । शीत-दीधितिश्चन्द्रमा अस्य प्रतिबिम्ब इति शीतदीधितबिम्बः । शीत-दीधितेरप्ययं बिम्ब इति वा । शीतदीधिति चन्द्रमण्डलमस्य प्रतीकमिति वा । तारयतीति तारकश्चायमपतिश्चेति तारकापतिः । अन्य-पतिरहितत्वादपतिः । अधिकपतित्वाच्च । तारकश्चायम्, अश्चायम्, पति-रिति वा । तारश्चायम्, कं चायम्, ‘कं ब्रह्म’ इति श्रुतेः, अश्चायम्, पतिश्चेति वा । एवं विधुपूजा तदन्तर्यामिण एव पूजेति **बुधः** सन् विधुमुपतिष्ठेतेत्यर्थः ॥

***

अथ **तत् सर्व**मर्घ्योपस्थानादिकम् **उपसंहृत्य** कृष्णाय समर्प्य समाप्य । उपसंहारमन्त्रमाह–**विश्वायेति च मन्त्रेण** । **विश्वायेति मन्त्रेण** समाप्य **च** । सर्वक्रियासमुच्चये चकारः । कृष्णायार्घ्यं दत्वा, चन्द्रमसे चार्घ्यं दत्वा, विधुमुपस्थाय च विश्वायेनिमन्त्रेण उपसंहृत्य च स्वापं समाचरेदिति ।

तथाहि मन्त्रः– **'विश्वाय विश्वपतये विश्वेश्वराय विश्वसम्भवाय श्री-गोविन्दाय नमोनमः । श्रीकृष्णः प्रीयताम् । श्रीकृष्णार्प्पितमस्तु'** इति । नित्यानुष्ठेयोऽपि यमः जयन्तीदिने विशिष्यानुष्ठेय इत्याह– **ब्रह्मचारी जितेन्द्रियः** । ब्रह्मणि वेदेषु परब्रह्मणि नारायणाख्ये चरतीति **ब्रह्मचारी** । तदर्थं **जितेन्द्रियः** । जितोपस्थश्च । न तावता पर्य्याप्तम् । सर्वाण्य-पीन्द्रियाणि नियमेन जिगीषेदित्याह– **जितेन्द्रियः** । 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायम्' इत्युक्तानि षडपीन्द्रियाणि जिगायेति **जितेन्द्रियः** । इन्द्रियनियन्ता हृषकेशो जितः भक्त्या वशीकृत इति । नित्यसमचारोऽयम् । विशेषतश्च श्रीकृष्णजन्मदिवसे । यथैका-दश्याम् । सर्वां वरिवस्यां पर्य्यवस्य ततः किं करणीयम्? **ततः स्वापं समाचरेत्** । ननु किमिदमपूर्वमुच्यते स्वापं समाचरेदिति? जागरणं समाचरेदिति पुराणानि घोषयन्ति । सत्यम्, जागरणमेव विधिविषयः । न स्वापः । स्वाभाविकत्वात् । नहि भुञ्जीतेति स्वपेदिति वा शक्यं विधातुम् । स्वाभाविकस्याविधेयत्वात् । तदुक्तं भागवते–'नित्यास्तु जन्तोर्न्नहि तत्र चोदना' (भाग.११.५.११) इति । किन्तु तत्र व्यवस्था क्रियते । यथोत्तरश्लोके 'ततः पारणमाचरेत्' इति । एवमिहापि । यदि जिजागरिषति जागर्यादेव । यदि सुषुप्सति, उत्तरकर्म्मस्वजामित्वाय, तदा **ततः** कृष्णचन्द्रार्य्यप्रदानानन्तरमेव । न सर्वथा ततः पूर्वमिति तच्छब्दे निघातः । न धातौ । तेन जागरणं वैकल्पिकमित्युक्तं भवति । समग्रं व्रत-मनायासेन सुकरं सम्पादनीयम् । यदि बलात् क्रियते तदा जागरणं श्रमहेतुः स्यात् । जामिताहेतुः स्यात् । तेन चारुणोदये पूजाकर्म्मणि तन्द्राहेतुः स्यात् । तस्मात् पूजार्त्थमुत्सहेत, न जागरणार्त्थमिति हृदयम् । अतः स्वापे जागरणविधिलोपः स्यादिति न भ्राम्येदित्येतत् । तस्मादजामित्वाय रात्रिकर्म्मावसानानन्तरमा अरुणोदयं **स्वापं समाचरेत्** । समित्याचरणे विधिलोपभीरुता मा भूदित्याह ॥

अथचार्त्थान्तरम्– यदा जिजागरिषति तदा, स्वयमेव स्वेच्छया भक्तानुजिघृक्षया भूमिमाप्नोतीति **स्वापं सं** श्रीकृष्णं **आ** समन्तात् शास्त्रस्वाद्ध्यायप्रवचनाभ्यां **चरेत्** अधिजिगांसेतेत्यर्थः ॥

***

अथ मन्त्रार्थः । **विश्वाय–**

१. विना गरुडेन श्वयति गच्छतीति विश्वं परं ब्रह्म । विश्वो वा ।

२. विशिष्टतया इतरविलक्षणतया निरवधि श्वयति वृद्धो भवतीति विश्वः । टुओ श्वि गतिवृद्ध्योः ।

३. जगदन्तर्विशतीति विश्वः ।

४. विश्वो वायुरस्यास्तीति विश्वः ।

५. विश्वं जीवजातमस्यास्तीति विश्वः ।

६. 'विश्वं पूर्णमिहोच्यते' इति विश्वः ।

७. विशिष्टं शं सुखं वं ज्ञानं बलं वाऽस्येति विश्वः ।

८. वयः ज्ञानिनः । तेषां कृते भूलोकं श्वयत्यागच्छतीति विश्वः ।

९. वीनां विदुषां शं च वं च सुखज्ञाने अस्मादिति विश्वः ।

१०. विं विनायकं विघ्नेशं विश्वम्भररूपेण श्वयति गच्छतीति विश्वः ।

११. विः विष्णुरयं श्वः ज्ञानानन्दमयः सर्वगतो वेति विश्वः ।

१२. जाग्रदवस्थाप्रेरको दक्षिणाक्षिस्थो विश्व इति वैश्वानरः । तदभेदात् कृष्णोऽपि विश्वः ।

१३. मातुः स्वास्ये विश्वं दर्शयामासेति विश्वः, सर्वं जगद् विशत्यस्य वक्त्रमिति ।

१४. प्रळयकाले जगदस्योदरं विशतीति विश्वः ।

१५. मुक्ता विशन्त्येनमिति विश्वः ।

१६. लोकव्यवहारार्थं वसुदेवगर्भं विशतीति विश्वः ।

१७. ततो देवकीगर्भं विशतीति विश्वः ।

१८. जननसमन्तरमेव नन्दगेहं विशतीति विश्वः ।

१९. गोपबालैः सह विविधं गाः श्वाययतीति विश्वः ।

२०. काळियदमनाय विषह्रदं विशतीति विश्वः ।

२१. कंसधनुर्भङ्गाय कंसभङ्गाय च मधुरां विशतीति विश्वः ।

२२. रुग्मिणीमुद्वोढुं कुण्डिनपुरं विशतीति विश्वः ।

२३. यादवैः सह द्वारकां विशतीति विश्वः ।

२४. अर्ज्जुनसारथ्याय कुरुक्षेत्रं विशतीति विश्वः ।

२५. तत्रार्ज्जुनाय विश्वरूपं दर्शयन् विविधं श्वयति वर्द्धत इति विश्वः ।

२६. विश्वमिति सहस्ररूपेषु प्रथमं रूपम् । तदभेदाच्च विश्वम् ।

एवमादयोऽर्थविशेषा यथास्फुरणमनुसन्धेयाः । अधिकं त्वस्मत्कृत-सहस्रनामभाष्ये द्रष्टव्यम् । तत्र विंशत्युत्तरशतमर्था निरूपिताः । अत्र तु विशेषतः कृष्णावतारसम्बन्धिन एवार्थाः । तस्मै **विश्वाय** ॥

**विश्वपतये–**

१. अखिलविश्वस्य पालनाद् विश्वपतिः ।

२. विश्वस्य वायोरपि पितेति विश्वपतिः ।

३. विश्वश्चासौ पतिश्चेति विश्वपतिः । तस्मै **विश्वपतये** ॥

**विश्वेश्वराय–**

१. विश्वस्यायमीश्वरः ।

२. विश्वेशानामपि वरः ।

३. विश्वश्चायमीश्वरश्चेति विश्वेश्वरः । तस्मै **विश्वेश्वराय** ॥

**विश्वसम्भवाय–**

१. विश्वमस्मात् सम्भवतति विश्वसम्भवः ।

२. विश्वे जगति चायं सम्भवत्यवतरतीति विश्वसम्भवः ।

३. विश्वेन वायुना सह भवतीति विश्वसम्भवः ।

४. विश्वश्चासौ सम्भवश्चेति विश्वसम्भवः । तस्मै **विश्वसम्भवाय** श्रीगोविन्दाय नमोनम इति ॥ ८–११ ॥

परेद्युः प्रातरुत्थाय करणीयं कर्म्मविशेषमाह प्रारम्भ इवान्तेऽपि जगती-गर्भयाऽनुष्टुभा–

**ततो नित्याह्निकं कृत्वा शक्तितो दीयतां धनम् ।**
**सर्वायेति च मन्त्रेण ततः पारणमाचरेत् ।**
**धर्म्मायेति ततः स्वस्थो मुच्यते सर्वकिल्बिषैः ॥ १२ ॥**

**॥ इति श्रीमदानन्दतीर्त्थभगवत्पादकृतो जयन्तीकल्पः ॥**

***

**ततः** अरुणोदयानन्तरं उत्थाय शौचस्नानादि सन्ध्यावन्दनदेवपूजान्तं सर्वं **नित्याह्निकं** निर्वर्त्त्य, पारणात् पूर्वम्, **'सर्वाय–'** **इति मन्त्रेण** यथाशक्ति **धनं च** पात्रेभ्यो **दीयताम्** । तथाहि पुराणवचनम्–

'—प्रभाते नवमीदिने ।
'ब्राह्मणान् भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥
'हिरण्यं मेदिनीं गावः वासांसि कुसुमानि च ।
'यद्यदिष्टतमं तत्तत् कृष्णो मे प्रीयतामिति' इति ॥
(भवि.पु.चतुर्थखण्डे ५५.५८–९)

ब्राह्मणान् भोजयित्वेति पुरा क्षत्रियादिविषयम् । अद्यत्वे तु सर्वेऽपि ब्राह्मणाः स्वेस्वे गृहे जयन्तीमाचरन्तीति अशक्यं परस्परं प्रायस्तेषामाह्वानं भोजनार्थम् । अतस्तन्नाऽह भगवत्पादः । सदक्षिणं हिरण्यादिकं च शक्तितो दद्यात् । तदेतत् सर्वं सङ्गृह्याऽह भगवत्पादः–**शक्तितो दीयतां धनमि**ति ॥

गाव इति द्वितीयार्थे प्रथमा । अक्षराधिक्ये चार्थाधिक्यम् । वरणीया गा इत्यर्थः । या दुहन्ति क्षीरम् । पिबन्ति नीरम् । अदन्ति च तृणानि । वसुदेवोपज्ञमिदम् । तथाहि भागवते– 'कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम्' (भाग.१०.४.११) इति । नन्दगोपश्च ततोऽधिकमस्पृशत्–'धेनूनां नियुतं प्रादाद् विप्रेभ्यः समलङ्कृतम्' (भाग.१०.६.३) इति । आचार्य्यवचनं च– 'मेनात एतौ निजपुत्रमेनं स्रष्टारमब्जप्रभवस्य चेशम् । महोत्सवात् पूर्णमनाश्च नन्दो विप्रेभ्योऽदाल्लक्षमितास्तदा गाः' (म.भा.ता.नि.१२.७७) इति ॥

सुवर्णं मेदिनीं गा वस्त्राणि च पुरुषाणाम् । वस्त्राणि कुसुमानि च सुवासिनीनामिति सर्ववर्ण्णविषयम् ॥

सर्वं सङ्गृह्य विशिष्य ब्राह्मणधर्म्मं भगवत्पाद आह– **शक्तितो दीयतां धनम्** । केन मन्त्रेण ? **सर्वायेति च मन्त्रेण** । **'सर्वाय सर्वपतये सर्वेश्वराय सर्वसम्भवाय श्रीगोविन्दाय नमोनमः । तुभ्यमहमिदं सम्प्रददे । तेन श्रीगोविन्दः प्रीयताम्'** इत्यनुसन्धानपूर्वकमिति **च**शब्देनाऽह ॥

***

अथ दानमन्त्रार्थः । **सर्वाय–**

१. पूर्णत्वात् सर्वः । 'सर्वं पूर्णमिहोच्यते' ।

२. सर्वगत्वात् सर्वः । 'सर्वं समाप्नोषि ततोऽसि सर्वः' ।

३. आप्तव्यं सर्वं समापेति सर्वः ।

४. सर्वप्रभवत्वात् सर्वः ।

५. सर्वाप्ययहेतुत्वात् सर्वः ।

६. सर्वज्ञत्वात् सर्वः । सर्व गतौ ।

७. सर्वेशत्वात् सर्वः ।

'सर्वेशत्वात् सर्वगत्वात् सर्वस्य प्रभवाप्ययात् ।
'सर्वस्य सर्वदा ज्ञानात् सर्वमेनं प्रचक्षते' इति स्मरन्ति ॥

'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्य्यामी ।
'एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्'

इति माण्डूकोपनिषदि ॥

८. सहस्ररूपेषु सर्वनामकं रूपं तु पञ्चविंशम् । 'सर्वः शर्वः शिवः स्थाणुः' । तदभिन्नत्वात् सर्वः । तस्मै **सर्वाय** ॥

**सर्वपतये–**

सर्वस्यपि पालनात् सर्वपतिः । तस्मै **सर्वपतये** ॥

**सर्वेश्वराय–**

१. सर्वेश्वरः सर्वजगत्स्वामी ।

२. सर्वेशा ब्रह्मरुद्राद्याः । तेभ्योऽपि वरः ।

३. सर्वश्च ईश्वरश्चेति वा । तस्मै **सर्वेश्वराय** ॥

**सर्वसम्भवाय–**

१. सर्वस्यायं सम्भव इति सर्वसम्भवः।

२. सर्वत्रायं सन्निहितो भवतीति सर्वसम्भवः।

३. सर्वः पूर्ण्ण एव सन् भूमौ नानारूपैः सम्भवत्यवतरतीति सर्वसम्भवः। तस्मै **सर्वसम्भवाय** श्रीगोविन्दाय नमोनमः॥

***

अवसितं नित्याह्निकम्। ततः किम्? **ततः** पूजासमनन्तरं शक्तितो दानानन्तरम्, प्रातरेव **पारणमाचरेत्**। व्रतसमाप्त्यङ्गतया क्रियमाणमशनं पारणं पारणा वा। पार कर्म्मसमाप्तौ। आहारनिद्रे न विधीयेते इत्युक्तम्। तस्मादत्रापि **तत** इत्यस्यैव निघातः। न धातोः। तेन द्वयं निरस्तं भवति। केचिद् रामानुजीया आचक्षते– अर्घ्यप्रदानानन्तरमर्द्धरात्र एव पारणमिति। तन्न युक्तमित्याह– **ततः** परेद्यवि नित्याह्निकानन्तरमेव **पारणमाचरेत्**। नतु पूर्वमिति। अपरे तु 'तिथिभान्ते च पारणम्' इति स्मृतिवचनं परमार्त्थं मन्यमानाः प्रातःपारणं नेच्छन्ति। तदप्यसङ्गतमित्याह– **ततः** नित्याह्निकानन्तरमेव, प्रातरेव **पारणमाचरेत्** इति। ननु विरुद्धवचनेष्वाचरणेषु च सत्सु कथं प्रातरेव पारणम् इत्यवधार्य्यते? 'प्रभाते नवमीदिने' इति भविष्यपुराणवचनादेवेति ब्रूमः। ननु 'रात्रावेव तु पारणम्' इति 'तिथिभान्ते च पारणम्' इति च स्मरन्ति। तत् किं भविष्यवचने पक्षपातः? भविष्यवचनं बलीयः। जिज्ञासवे धर्म्मराजाय स्वयं भगवता श्रीकृष्णेन प्रोक्तमिति भविष्यवचने वक्तृश्रोतृप्रसक्तीनामानुकूल्यादाप्ततमत्वम्। अतस्तदनुसारेणैव जयन्तीकल्पमाचार्य्यः प्रबबन्ध। तेन तिथिभान्तपारणं नाऽचार्य्यसम्मतम्, नापि विष्णुतीर्त्थसम्मतम्॥

'प्रातरेवाथ पूजयेत्' इति विष्णुतीर्त्थवचनस्य 'ततः पारणमाचरेत्' इत्याचार्य्यवचनस्य च संयुक्ततया पठने सर्वं प्रमेयं स्फुटं भवति। नहि

प्रातरेव नैवेद्यसमर्प्पणं तिथिभान्त उपोषणमिति सम्भवति। तस्मादाचार्य्येण विष्णुतीर्थेन च नोक्तमिति तानि वचनान्यन्यथा योजनीयानि ॥

कथम् ? त्रयी गतिरिह भवति–

१. तामसानां मोहार्त्थानि वचनानीति ।

२. स्वापवदुभयोर्विकल्प इति ।

३. काम्यकर्म्मिणां कृते तानि वचनानीति ।

तत्र तृतीयः कल्पः साधीयानिति । विकल्पपक्षेऽपि व्यवस्थितविकल्पः । नित्यकर्म्मिणां प्रातरेव पारणम् । काम्यकर्म्मिणां तिथिभान्ते पारण-मिति । तस्माद् द्वितीयः कल्पोऽपि तृतीय एवान्तर्भवति । जयन्तीव्रतं नित्यं कर्म्म। तस्मान्नात्र कामना युक्तेति न भगवत्पादस्तदाहेति सर्वं सुन्दरम् ॥

**ततः** प्रातरेव **पारणमाचरेत्**। तत्राऽदौ वक्तव्यं प्रार्त्थनमन्त्रमाह– **धर्म्मायेति**। **'धर्म्माय धर्म्मपतये धमेश्वराय धर्म्मसम्भवाय श्रीगोविन्दाय नमोनमः । जयन्तीव्रतान्ते पारणं करिष्ये'** इति प्रार्त्थ्य **पारणमाचरेत्** इत्यर्थः ॥

अयं मन्त्रार्त्थः। **धर्म्माय–**

१. जगद्धारणाद् धर्म्मः।

२. मात्स्ये क्षोणीमयद्रोणीं दधारेति धर्म्मः ।

३. समुद्रमथने मन्दराचलं धरतीति धर्म्मः।

४. वाराहे भूमिमुद्दधारेति धर्म्मः।

५. नरसिंहो भूत्वा प्रह्लादमुद्दधारेति धर्म्मः।

६. दुष्टक्षत्रनिर्मूलनेन भूमिमुद्दधारेति परशुरामो धर्म्मः ।

७. सर्वभूतेभ्योऽभयं ददामीति धनुर्दधारेति रामो धर्म्मः ।

८. धर्म्मसंस्थापनार्त्थमवतारान् धरतीति धर्म्मः ।

९. चतुरो भुजान् धत्त इति चतुर्भुजो धर्म्मः ।

१०. भुजेषु शङ्खचक्रगदापद्मानि धरतीति धर्म्मः ।

११. धरान् पर्वतान् निर्म्मातीति धर्म्मः ।

१२. धरान् लोकधारकान् ब्रह्मादीन् निर्म्मातीति धर्म्मः ।

१३. अथ कृष्णत्वे गोवर्द्धनाचलं दधारेति धर्म्मः ।

१४. लीलामानुषविग्रहं दधारेति धर्म्मः ।

१५. श्रीवत्सं कौस्तुभं च धरतीति धर्म्मः ।

१६. मुचुकुन्दमुद्दधारेति धर्म्मः ।

१७. तमालश्यामलकृतिं दधारेति धर्म्मः ।

१८. कोटिसूर्य्यसमप्रभां धरतीति धर्म्मः ।

१९. यदूनुद्दधारेति धर्म्मः ।

२०. वनमालां धरतीति धर्म्मः ।

२१. तुळसीदाम धरतीति धर्म्मः ।

२२. अङ्कयोर्ल्लक्ष्मीधरे रुग्मिणीसत्यभामे दधारेति धर्म्मः ।

२३. मुक्तिदानेन भीष्ममुद्दधारेति धर्म्मः ।

२४. गाश्चारयन् वेणुं दधारेति धर्म्मः ।

२५. पीतं वासो दधारेति धर्म्मः ।

२६. कुब्जामुद्दधारेति धर्म्मः ।

२७. अक्षयाम्बरदानेन कृष्णामुद्दधारेति धर्म्मः ।

२८. दुर्य्योधनकुलान्तको भूत्वा पाण्डवानुद्दधारेति धर्म्मः ।

२९. अर्ज्जुनार्त्थं विश्वरूपं दधारेति धर्म्मः ।

३०. कुरुक्षेत्रे पार्त्थसारथ्ये कर्क्काश्वानां खलीनं प्रग्रहं च दधारेति धर्म्मः ।

३१. सुभद्रामुद्दधारेति धर्म्मः ।

३२. बर्हिबर्हमवतंसे दधारेति धर्म्मः ।

३३. गीतामृतदानेन सर्वसज्जनानुद्दधारेति धर्म्मः ।

३४. धरैः लोकधारकैर्म्मीयत इति धर्म्मः ।

३५. धारणात् रतिज्ञानरूपत्वाद् धर्म्मः ।

३६. धरण्यां रमत इति धर्म्मः ।

३७. धर्म्मदेवतान्तर्य्यामित्वाद् धर्म्मः ।

३८. सहस्ररूपेषु ४०४तमं धर्म्माह्वयम् । तदभेदाच्च धर्म्मः । तस्मै **धर्म्माय** । एवमादयो बहवोऽर्त्थाः जयन्तीव्रतेऽनुसन्धेयाः । दिङ्मात्र-दर्शनमिदम् ॥

**धर्म्मपतये–**

१. लोकधारकाणां ब्रह्मादीनामपि पालक इति धर्म्मपतिः ।

२. लोकधर्म्मपालनाच्च धर्म्मपतिः ।

३. धर्म्मपानां तिरानन्दोऽनेनेति धर्म्मपतिः । तस्मै **धर्म्मपतये** ॥

**धर्म्मेश्वराय–**

१. सर्वधर्म्माणामयमीश्वर इति धर्म्मेश्वरः ।

२. धर्म्मश्चायमीश्वरश्चेति धर्म्मेश्वरः ।

३. धर्म्मेशेभ्यःसर्वेभ्योऽप्ययं वर इति धर्म्मेश्वरः । तस्मै **धर्म्मेश्वराय** ॥

**धर्म्मसम्भवाय–**

१. धर्म्मसंस्थापनाय भूमौ सम्भवतीति धर्म्मसम्भवः ।

२. धर्म्मतनयत्वेन नरो नारायणो हरिः कृष्ण इति चतुर्द्धा सम्भवतीति धर्म्मसम्भवः ।

३. धर्म्मश्चासौ सम्भवश्चेति धर्म्मसम्भवः ।

४. धर्म्मस्य चायं सम्भव इति धर्म्मसम्भवः ।

५. धर्म्मराजः सङ्गतो भवत्यनेनेति धर्म्मसम्भवः । तस्मै **धर्म्मसम्भवाय** श्रीगोविन्दाय नमोनम इति सर्वोपसंहारः ॥

सर्वं व्रतं पारणान्तमवसितम् । ततः किम्? **ततः स्वस्थः मुच्यते सर्वकिल्बिषैः । ततः** पारणानन्तरम्, जयन्तीव्रतपूर्त्य्यनन्तरमपि **स्वस्थः** स्वे स्वतन्त्रे, स्वस्य अत्यन्तमात्मीये वा स्वरिति स्वरमणे वा भगवति स्थिरमतिः **स्वस्थः** । सर्वदा भगवदेकतानमना इत्यर्थः । अस्यां जयन्त्यां कृष्णस्मरणम् । ततो विस्मरणमस्मरणं वा । पुनरागामिन्यां जयन्त्यां स्मरणमिति मा भूदित्याशयः । तेन **सर्वपातकैः** मुक्तो भवति । मरणानन्तरं च **स्वस्थः** स्वर्ग्गतो भवति । न कदाऽपि नरकदर्शनं तस्य भवतीत्यर्थः । अन्ते च स्वरमणे भगवति स्थिरतया स्थितः सन् **स्वस्थः** स्वस्थमनाः । संसारादेव **मुच्यत** इति ॥

'आगः किल्बिषिमेनश्च त्रीणि पाप्मापराधयोः' इति यादवप्रकाशः । भगवदपराध एव हि पाप्मा । विषयाख्ये विषे केलयति क्षिपतीति किल्बिषम् । किल क्षेपे । इति सर्वं सुन्दरम् ॥

इमामाचार्य्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
वितेने विमलां टीकां जयन्तीकल्पचन्द्रिकाम् ॥ ✻ ॥

आचार्य्यवचनं स्वच्छं नळिनं तदपीतरैः ।
अपव्याख्यानमलिनं क्षाळयामास शक्तितः ॥ ✻ ॥

**॥ इत्याचार्य्यगोविन्दस्य कृतिषु जयन्तीकल्पचन्द्रिका सम्पूर्णा ॥**

—०—

# परिशिष्टानि

# बह्वृचानां पूजाविधानम्

कृष्णावतारसमये सपरिवारस्य श्रीकृष्णस्य पुरुषसूक्तमन्त्रैः षोडशोपचार-पूजाख्यं कर्म्म करिष्ये–

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ॥

नमोऽस्त्वनन्ताय सहस्रमूर्त्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ॥

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद् दशाङ्गुलम् ॥ १ ॥

ॐ श्रीकृष्णाय नमः । ॐ बलभद्राय नमः । ॐ वसुदेवाय नमः । ॐ देवक्यै नमः । ॐ नन्दगोपाय नमः । ॐ यशोदायै नमः । ॐ सुभद्रायै नमः । सपरिवारं श्रीकृष्णमावाहयामि । श्रीकृष्णं प्रार्थयामि ।

ॐ पुरुषऽ एवेदं सर्वं यद् भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय आसनं समर्प्पयामि ।

ॐ एतावा॑नस्य महि॒मातो॒ ज्याया॑ंश्च॒ पूरु॑षः ।
पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि ॥ ३ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय पाद्यं समर्प्पयामि ।

ॐ त्रि॒पादू॒र्ध्वऽ उदै॒त् पुरु॑षः॒ पादो॑ऽस्ये॒हाभ॑व॒त् पुन॑ः ।
ततो॒ विष्व॒ङ् व्य॑क्रामत् साशनानश॒ने ऽ अ॒भि ॥ ४ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय अर्घ्यं समर्प्पयामि ।

ॐ तस्मा॑द् वि॒राळ॑जायत वि॒राजो॒ऽ अधि॒ पूरु॑षः ।
स जा॒तोऽ अत्य॑रिच्यत प॒श्चाद् भूमि॒मथो॑ पु॒रः ॥ ५ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय आचमनीयं समर्प्पयामि ।

ॐ यत् पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत ।
व॒स॒न्तोऽ अ॑स्यासी॒दाज्यं॑ ग्री॒ष्मऽ इ॒ध्मः श॒रद्ध॒विः ॥ ६ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय स्नानं समर्प्पयामि ।

ॐ तं य्य॒ज्ञं ब॒र्हिषि॒ प्रौक्ष॒न् पुरु॑षं जा॒तम॑ग्र॒तः ।
तेन॑ दे॒वाऽ अ॑यजन्त सा॒ध्याऽ ऋष॑यश्च॒ ये ॥ ७ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय वस्त्रं समर्प्पयामि। पुनराचमनं समर्प्पयामि।

ॐ तस्माद् यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्।
पशून् तांश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥ ८॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय यज्ञोपवीतं समर्प्पयामि।

ॐ तस्माद् यज्ञात् सर्वहुतऽ ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ ९॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय गन्धं समर्प्पयामि।

ॐ तस्मादश्वाऽ अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात् तस्माज्जाताऽ अजावयः ॥ १०॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय पुष्पाणि समर्प्पयामि।

ॐ यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्य कौ बाहू काऽ ऊरूऽ पादाऽ उच्येते ॥ ११॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय धूपमाघ्रापयामि।

ॐ ब्राह्मणोस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रोऽ अजायत ॥ १२॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय दीपं दर्शयामि।

ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽ अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद् वायुरजायत ॥ १३ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय द्राक्षामातुलुङ्गादिसमस्तफलानि सिता-पासयादि-समस्तमधुरद्रव्याणि षष्कुल्याद्यानि खाद्यानि च समर्प्पयामि।

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय पुनराचमनं समर्प्पयामि।

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय मङ्गलनीराजनं समर्प्पयामि।

ॐ नाभ्याऽ आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन् ॥ १४ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय नमस्कारं समर्प्पयामि।

ॐ सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः।
देवा यद् यज्ञं तन्वानाऽ अबध्नन् पुरुषं पशुम् ॥ १५ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय प्रदक्षिणं समर्प्पयामि।

ॐ यज्ञेन यज्ञमयजन्त देवा-
स्तानि धर्म्माणि प्रथमान्यासन्।

ते ह नाकं महिमानः सचन्त
यत्र पूर्वे साद्ध्याः सन्ति देवाः ॥ १६ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय दक्षिणां समर्प्पयामि ।

आवाहितदेवताभ्यो नमः । यथास्थानमुद्वासयामि ।

अनेन कृष्णावतारसमये कृतेन पूजाकर्म्मणा मध्वपतिः श्रीगोपालकृष्णः प्रीयताम् ॥

अच्युताय नमः । अनन्ताय नमः । गोविन्दाय नमः । श्रीकृष्णार्प्पणमस्तु ॥

—०—

# याजुषाणां पूजाविधानम्

कृष्णावतारसमये सपरिवारस्य श्रीकृष्णस्य पुरुषसूक्तमन्त्रैः षोडशोपचार-पूजाख्यं कर्म्म करिष्ये–

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ।।

नमोऽस्त्वनन्ताय सहस्रमूर्त्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ।।

ॐ स॒हस्र॑शीर्षा॒ पुरु॑षः । स॒ह॒स्रा॒क्षः स॒हस्र॑पात् ।
स भूमिं॑ वि॒श्वतो॑ वृ॒त्वा । अत्य॑तिष्ठद् दशाङ्गु॒लम् ।। १ ।।

ॐ श्रीकृष्णाय नमः । ॐ बलभद्राय नमः । ॐ वसुदेवाय नमः । ॐ देवक्यै नमः । ॐ नन्दगोपाय नमः । ॐ यशोदायै नमः । ॐ सुभद्रायै नमः । सपरिवारं श्रीकृष्णमावाहयामि । श्रीकृष्णं प्रार्थयामि ।

ॐ पुरु॑ष ए॒वेदङ् सर्वं॑म् । यद् भूतं॒ यच्च॒ भव्य॑म् ।
उ॒तामृ॑त॒त्वस्येशा॑नः । यदन्ने॑नाति॒रोह॑ति ।। २ ।।

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय पाद्यं समर्प्पयामि।

ॐ एतावा॑नस्य महि॒मा। अतो॒ ज्याया॑ङ्श्च पूरु॑षः।
पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑। त्रि॒पाद॑स्या॒मृतं॑ दि॒वि ॥ ३ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय अर्घ्यं समर्प्पयामि।

ॐ त्रि॒पादू॒र्ध्व उदै॒त् पुरु॑षः। पादो॑ऽस्ये॒हाभ॑वा॒त् पुन॑ः।
ततो॒ विष्व॒ङ् व्य॑क्रामत्। सा॒श॒ना॒न॒श॒नेऽ अ॒भि ॥ ४ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय आसनं समर्प्पयामि।

ॐ तस्मा॑द् वि॒राड॑जायत। वि॒राजो॒ अधि॒ पूरु॑षः।
स जा॒तो अत्य॑रिच्यत। प॒श्चाद् भूमि॒मथो॑ पु॒रः ॥ ५ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय आचमनं समर्प्पयामि।

ॐ यत् पुरु॑षेण ह॒विषा॑। दे॒वा य॒ज्ञमत॑न्वत।
व॒स॒न्तो अ॑स्याऽसी॒दाज्य॑म्। ग्री॒ष्म इ॒ध्मः श॒रद्ध॒विः ॥ ६ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय स्नानं समर्प्पयामि।

ॐ स॒प्तास्या॑ऽसन् परि॒धय॑ः। त्रिः स॒प्त स॒मिध॑ः कृ॒ताः।
दे॒वा यद् य॒ज्ञं त॑न्वा॒नाः। अब॑ध्न॒न् पुरु॑षं प॒शुम् ॥ ७ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदा-सहिताय सुभद्रासहिताय श्रीकृष्णाय पुनराचमनं समर्प्पयामि ॥

ॐ तं य्यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः ।
तेन देवा अयजन्त । साद्ध्या ऋषयश्च ये ॥ ८ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदा-सहिताय सुभद्रासहिताय श्रीकृष्णाय वस्त्रं समर्प्पयामि ॥

ॐ तस्माद् यज्ञात् सर्वहुतः । सम्भृतं पृषदाज्यम् ।
पशूङ्स्ताङ्श्चक्रे वायव्यान् । आरण्यान् ग्राम्याश्च ये ॥ ९ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय गन्धं समर्प्पयामि ।

ॐ तस्माद् यज्ञात् सर्वहुतः । ऋचः सामानि जज्ञिरे ।
छन्दाङ्सि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥ १० ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय सुगन्धद्रव्याणि समर्प्पयामि ।

ॐ तस्मादश्वा अजायन्त । ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः ॥ ११ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय दूर्वातुळस्यादिसमस्तपुष्पाणि समर्प्पयामि ॥

ॐ यत् पुरुषं व्यदधुः । कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते ॥ १२ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय धूपमाघ्रापयामि ॥

ॐ ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ।
ऊरू तदस्य यद् वैश्यः । पद्भ्याङ् शूद्रो अजायत ॥ १३ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय दीपं दर्शयामि ।

ॐ चन्द्रमा मनसो जातः । चक्षोः सूर्य्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च । प्राणाद् वायुरजायत ॥ १४ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय अशनं पानं खाद इति त्रेधा विहितं मृष्टमन्नं समर्प्पयामि ।

ॐ नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाँ अकल्पयन् ॥
॥ १५ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय पुनराचमनं समर्प्पयामि ।

ॐ वेदाहमेतं पुरुषं महान्तम् ।
आदित्यवर्ण्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरः ।
नामानि कृत्वाऽभिवदन् यदास्ते ॥ १६ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय  मङ्गळनीराजनं समर्प्पयामि।

ॐ धाता पुरस्ताद् यमुदाजहार ।
शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति ।
नान्यः पन्था अयनाय विद्यते                    ॥ १७ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय  सर्वोपचारपूजाः समर्प्पयामि।

ॐ यज्ञेन यज्ञमयजन्त देवाः ।
तानि धर्म्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते ।
यत्र पूर्वे साद्ध्याः सन्ति देवाः                    ॥ १८ ॥

ॐ बलभद्रसहिताय वसुदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय प्रदक्षिणनमस्कारान्  समर्प्पयामि।

आवाहितदेवताभ्यो नमः। यथास्थानमुद्वासयामि।

अनेन कृष्णावतारसमये कृतेन श्रीकृष्णपूजाकर्म्मणा मध्वपतिः श्रीगोपाल-कृष्णः प्रीयताम्।

अच्युताय नमः। अनन्ताय नमः। गोविन्दाय नमः। श्रीकृष्णार्प्पणमस्तु॥

—०—

# सङ्क्षिप्तपूजाविधानम्

कृष्णावतारसमये सपरिवारस्य श्रीकृष्णस्य पूजाख्यं कर्म्म करिष्ये–

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ।।

नमोऽस्त्वनन्ताय सहस्रमूर्त्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ।।

ॐ श्रीकृष्णाय नमः । ॐ बलभद्राय नमः । ॐ वसुदेवाय नमः । ॐ देवक्यै नमः । ॐ नन्दगोपाय नमः । ॐ यशोदायै नमः । ॐ सुभद्रायै नमः । सपरिवारं श्रीकृष्णमावाहयामि । श्रीकृष्णं प्रार्थयामि ।।

सपरिवाराय श्रीकृष्णाय पाद्यादीनुपचारान् समर्प्पयामि ।।

सपरिवाराय श्रीकृष्णाय गन्धं समर्प्पयामि ।।

सपरिवाराय श्रीकृष्णाय दूर्वातुळस्यादिपुष्पाणि समर्प्पयामि ।।

सपरिवाराय श्रीकृष्णाय धूपमाघ्रापयामि ॥

सपरिवाराय श्रीकृष्णाय दीपं दर्शयामि ॥

सपरिवाराय श्रीकृष्णाय भक्ष्यं भोज्यं चोष्यं लेह्यमिति चतुर्विधं मृष्टान्नं समर्प्पयामि ॥

सपरिवाराय श्रीकृष्णाय मङ्गलनीराजनं समर्प्पयामि ॥

सपरिवाराय श्रीकृष्णाय प्रदक्षिणनमस्कारान् समर्प्पयामि ॥

सपरिवारं श्रीकृष्णं यथास्थानमुद्वासयामि ॥

आवाहितदेवताभ्यो नमः । यथास्थानमुद्वासयामि ॥

अनेन कृष्णावतारसमये कृतेन श्रीकृष्णपूजाकर्म्मणा मध्वपतिः श्रीगोपाल-कृष्णः प्रीयताम् ॥

अच्युताय नमः । अनन्ताय नमः । गोविन्दाय नमः । श्रीकृष्णार्प्पणमस्तु ॥

—०—

# कृष्णार्घ्यप्रदानम्

**सिंहमासस्य बहुलाष्टम्यामर्द्धरात्रे श्रीकृष्णावतारसमये सपरिवाराय श्रीकृष्णायार्घ्यं प्रदास्यामि ॥**

इति सङ्कल्प्य, वक्ष्यमाणमन्त्रैः सपरिवारं श्रीकृष्णं पूजयेत्, तुळस्या बिल्वपत्रेण वा । तुळसी श्रियः सखी, समुद्रमथनोद्भूतत्वाद् भगिनी च । चन्द्रभगिनी च । तेन कृष्णप्रिया चेति स्मरन्ति–

'प्रसीद तुळसीदेवि प्रसीद हरिवल्लभे ।
'क्षीरोदमथनोद्भूते तुळसि त्वां नमाम्यहम्' इति ॥

बिल्ववने नित्यं श्रियो वासः । 'वनस्पतिस्तव वृक्षोऽथ बिल्वः' इति हि श्रुतिः । तेन बिल्वपत्रेषु सदा श्रीः सन्निधत्ते । तद् यद् बिल्वपत्रेण कृष्णमर्च्चयन्ति तच्छ्रीरेव स्वयं कृष्णमर्च्चयतीव । तद् विशिष्यास्मिन् दिने बिल्वपत्रैरर्च्चयेदिति सम्प्रदायः ॥

**ॐ श्रीकृष्णाय नमः । ॐ बलभद्राय नमः । ॐ वसुदेवाय नमः । ॐ देवक्यै नमः । ॐ नन्दगोपाय नमः । ॐ यशोदायै नमः । ॐ सुभद्रायै नमः ॥**

सप्तभिरपि मन्त्रैस्तत्तदन्तर्यामी कृष्ण एव पूज्यत इत्यनुसन्धेयमिति प्रतिमन्त्रमोङ्कारः । ततो वक्ष्यमाणमन्त्रेण शङ्खपूरितेन शुद्धोदकेनार्घ्यपात्रे सपरिवाराय श्रीकृष्णाय जलाञ्जलिं प्रदद्यात् । शङ्खं लक्ष्मीरूपमिति

यच्छङ्खोदकेनार्घ्यं प्रददाति तच्छ्रीरेव स्वयं स्वपतये श्रीकृष्णाय जलाञ्जलिमर्प्पयति–

**ॐ बलभद्रसहिताय वसदेव-देवकीसहिताय नन्दगोप-यशोदासहिताय सुभद्रासहिताय श्रीकृष्णाय इदमर्घ्यम् ।।**

केचित् त्रिरर्घ्यं ददति । तदाचार्य्यैर्न्नोक्तमिति सकृदेवेति युक्तम् । ततः पूर्वोक्तेनैव मन्त्रेण पुनरर्च्चनं कुर्य्यात् तुळस्या बिल्वपत्रेण वा ।।

**ॐ श्रीकृष्णाय नमः । ॐ बलभद्राय नमः । ॐ वसुदेवाय नमः । ॐ देवक्यै नमः । ॐ नन्दगोपाय नमः । ॐ यशोदायै नमः । ॐ सुभद्रायै नमः ।।**



# चन्द्रार्घ्यप्रदानम्

कृष्णार्घ्यप्रदानानन्तरं चन्द्रायार्घ्यं दद्यात् । यस्य रोहिणीयोगेन जन्माष्टमी जयन्ती बभूव । ततस्तत्स्मरणाय चन्द्रायापि जलाञ्जलिना गौरवसमर्प्पणम् ॥

केचिदिदमर्घ्यप्रदानं तुळसीसन्निधौ कुर्वन्ति । कुर्वन्तु नाम । किन्तु न विधिरयम् । गृहेऽपि कुर्य्यात् । प्रायश्चन्द्रदर्शनलाभाय बहिः कुर्वन्तीति भाति ॥

अथान्ये क्षीरेणार्घ्यं ददति । क्षीरतुल्या चन्द्रिकेति स्मरणार्त्थं स्यात् । क्षीरोदार्ण्णवसम्भूत इति ज्ञापयितुं वा ॥

भूवावुदितस्य कृष्णचन्द्रमसः जलेनार्घ्यप्रदानम्, गगनस्थचन्द्रमसः क्षीरेणेति नातीवि श्लिष्यति । आचार्य्यैरपि नोक्तमिदम् । नापि भविष्यत्पुराणे ॥

नारिकेलखण्डेऽर्घ्यप्रदानमित्येके । नारिकेलफलरसेनेत्यपरे । नेदमपि आचार्य्योक्तम् । नापि भविष्यत्पुराणोक्तम् । तस्मान्न विधिः । अर्घ्यमिति जलाञ्जलिरेवोच्यते– अर्घार्त्थं जलमर्घ्यमिति । न क्षीरम्, नापि नारिकेलफलरसो वा । संहताभ्यां हस्ताभ्यां जलपूर्ण्णं शङ्खमादायार्घ्यप्रदानं जलाञ्जलिर्न्नाम । केवलाभ्यां वा संहतहस्ताभ्याम् ॥

वस्तुतः चन्द्रार्घ्ये न शङ्खापेक्षा । केवलं जलपूर्ण्णः अञ्जलिः पर्य्याप्तः । अथापि चन्द्रान्तर्य्यामिणः धन्वन्तरिरूपिणः श्रीकृष्णचन्द्रस्यैवेदमर्घ्यमित्यनुसन्दधतां शङ्खाञ्जलिरपि युक्ततर एव । भगिनी भ्रातरमुल्लाघयतीति च ।

प्रथमतः वक्ष्यमाणमन्त्रेण चन्द्रस्योपस्थानम् । इदमप्यन्तर्य्यामिपरमिति साळग्रामे तुळस्या बिल्वपत्रस्य वा समर्प्पणम्–

**शशिने चन्द्रदेवाय सोमदेवाय चेन्दवे ।**
**मृगिणे सितबिम्बाय लोकदीपाय दीपिने ।**
**शीतदीधितिबिम्बाय तारकापतये नमः ॥**

ततोऽर्घ्यप्रदानम्–

**क्षीरोदार्ण्णवसम्भूत अत्रिनेत्रसमुद्भव ।**
**गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम ॥**

**रोहिणीसहिताय चन्द्रमस इदमर्घ्यम् ॥**

अन्ते पुनरुपस्थानं पूर्वमन्त्रेण, पूर्ववदेव तुळस्या बिल्वपत्रेण वा–

**शशिने चन्द्रदेवाय सोमदेवाय चेन्दवे ।**
**मृगिणे सितबिम्बाय लोकदीपाय दीपिने ।**
**शीतदीधितिबिम्बाय तारकापतये नमः ॥**

**अनेन श्रीकृष्णावतारसमये सचन्द्रार्घ्यं श्रीकृष्णार्घ्यप्रदानेन श्रीकृष्णचन्द्रः प्रीयताम् ॥**

**अच्युताय नमः । अनन्ताय नमः । गोविन्दाय नमः । श्रीकृष्णार्प्पणमस्तु ॥**

केचिदर्घ्यप्रदानानन्तरं निशीथ एव भोजनमुशन्ति । नैतदाचार्य्यसम्मतम्, द्वाभ्यां कारणाभ्याम्, रात्रौ मुख्यप्राणस्य न समर्प्पणमस्तीति, अर्द्धरात्रात् परं भोजनं निषिद्धमिति ॥

अतः उक्तमाचार्य्यैः–ततः अर्घ्यप्रदानानन्तरमजामित्वाय स्वापं समाचरेदिति । अधिकं कल्पचन्द्रिकायां द्रष्टव्यम् ॥

—०—

# परेद्यवि कृत्यम्

‘प्रातरेवाथ पूजयेत्’ इत्युक्तम् । ततः पूजानन्तरमेव, प्रातरेव पारण-माचरेत् । नहि प्रातः समर्प्पितमन्नं तिथिभान्तपर्य्यन्तं प्रतीक्ष्य तदन्ते पूतिगन्धि पर्य्युषितं चान्नमश्नीयादिति शक्यं वक्तुम् । नच पूजाऽपि तिथिभान्त एवेति वक्तव्यम्, ‘प्रातरेवाथ पूजयेत्’ इति विष्णुतीर्थ-वचनविरोधात् । ‘प्रभाते नवमीदिने’ इति भविष्यत्पुराणविरोधाच्च ।

अतः परेद्यवि प्रातरेव, पूजानन्तरं भोजनानन्तरं वा व्रतसमाप्तिः–

**अनेन जयन्तीव्रताचरणेन श्रीकृष्णः प्रीयताम् । श्रीकृष्णार्प्पणमस्तु-इति ॥**

—०—

# श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम्

**श्रीधरण्युवाच**

शेष शेष महाबाहो धृताऽस्मि तव मौलिभिः ।
पूताऽस्मि कृतकृत्याऽस्मि त्वयैव विधृताः प्रजाः ॥ १ ॥

गङ्गाधरेण गङ्गेव धृता मूर्ध्नि प्रयत्नतः ।
भगीरथतपःप्रीत्या हरेण विधृता पुरा ॥ २ ॥

नानाचलाम्बुधिप्राणितीर्थलोकवनैर्युता ।
पञ्चाशत्कोटिविस्तीर्ण्णा शिरोभिर्ल्लीलया धृता ॥ ३ ॥

मम भारावतारार्थमवतीर्ण्णेन विष्णुना ।
सह त्वमवतीर्ण्णोऽसि मूर्त्तिभेदैस्तु मूर्त्तिषु ॥ ४ ॥

शय्यासनपरीधानपादुकाच्छत्रचामरैः ।
किं चान्यैस्तस्य देवस्य सर्वदा सर्वमूर्त्तिषु ॥ ५ ॥

**महेश्वर उवाच**

धरण्या दोवदेव्याऽपि सादरं पृच्छमानया ।
एवं निगदितः शेषः प्रणम्य प्रत्युवाच ताम् ॥ ६ ॥

**शेष उवाच**

विश्वम्भरे नमस्तुभ्यं विश्वोपादानसाधने ।
विष्णुप्रिये वरारोहे विश्वलोकनमस्कृते ॥ ७ ॥

त्वं माता सर्वलोकानां त्वमेव जगतां पतिः ।
आधारा भूतभूतानां विष्णोश्च मम किं पुनः ॥ ८ ॥

तवापि सर्वलोकानां मन्दानां मादृशामपि ।
भर्त्ता हर्त्ता नियन्ता च साक्षान्नारायणो हरिः ॥ ९ ॥

तस्यैव शासनाद् देवि तद्बलाच्च वसुन्धरे ।
नमामि वरदे नित्यमाज्ञापय करोमि किम् ॥ १० ॥

**श्रीधरण्युवाच**

कृष्णावतारे रोहिण्यां रामेणापि त्वया तथा ।
अलङ्कृतं जगत्पुंसामपि नन्दव्रजौकसाम् ॥ ११ ॥

तस्य देवस्य कृष्णस्य लीलाविग्रहधारिणः ।
जयप्रदानि मुक्तानि सन्ति नामान्यनेकशः ॥ १२ ॥

तेषु नामानि मुख्यानि श्रोतुकामा चिरादहम् ।
सङ्कर्षणात् पुनस्त्वत्तो यतो जनासि वाङ्मयम् ॥ १३ ॥

तत् तानि ब्रूहि नामानि वासुदेवस्य वासुके ।

**शेष उवाच**

नातः परतमं किञ्चित् त्रिषु लोकेषु विद्यते ॥ १४ ॥

वसुन्धरे वरारोहे नानानामसु भक्तिदम् ।
सर्वमङ्गलमूर्द्धन्यमणिमाद्यष्टसिद्धिदम् ॥ १५ ॥

महापातककोटिघ्नं सर्वतीर्थफलप्रदम् ।
समस्तवेदयज्ञानां फलदं पापनाशनम् ॥ १६ ॥

शृणु देवि प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ।
सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत् फलम् ॥ १७ ॥

सकृदुच्चारणात् कृष्णनामैकं तत् प्रयच्छति ।
तस्मात् पुण्यतमं देवि स्तोत्रं परमपावनम् ॥ १८ ॥

**श्रीकृष्णाष्टोत्तरशतनाम्नां नारायण ऋषिः । अनुष्टुप् छन्दः ।**
**श्रीगोपालकृष्णो देवता ॥**

ओम् ॥ श्रीकृष्णः कमलानथो वासुदेवः सनातनः ।
वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ १९ ॥

श्रीवत्सकौत्सुभधरो यशोदावत्सलो हरिः ।
चतुर्भुजात्तचक्रासिगदाशङ्खाद्युदायुधः ॥ २० ॥

देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः ।
यमुनावेगसंहारी बलभद्रप्रियानुजः ॥२१ ॥

पूतनाजीवितहरः शकटासुरभञ्जनः ।
नन्दव्रजजनानन्दः सच्चिदानन्दविग्रहः ॥ २२ ॥

नवनीतविलिप्ताङ्गो नवनीतनटोऽनघः ।
नवनीतनवाहारो मुचुकुन्दप्रसादकृत् ॥ २३ ॥

षोडशस्त्रीसहस्रेशस्त्रिभङ्गीमधुराकृतिः ।
शुकवागमृताब्धीन्दुर्गोविन्दो योगिनाम्पतिः ॥ २४ ॥

वत्सपादहरोऽनन्तो धेनुकासुरभञ्जनः ।
तृणीकृततृणावर्त्तो यमळार्ज्जुनभञ्जनः ॥ २५ ॥

उत्तालतालभेत्ता च तमालश्यामळाकृतिः ।
गोपगोपीश्वरो योगी कोटिसूर्य्यसमप्रभः ॥ २६ ॥

इळापतिः परञ्ज्योतिर्य्यादवेन्द्रो यदूद्वहः ।
वनमाली पीतवासाः पारिजातापहारकः ॥ २७ ॥

गोवर्द्धनाचलोद्धर्त्ता गोपालः सर्वपालकः ।
अजो निरञ्जनः कामजनकः कञ्जलोचनः ॥ २८ ॥

मधुहा मधुरानाथो द्वारकानायको बली ।
वृन्दावनान्तःसञ्चारी तुळसीदामभूषणः ॥ २९ ॥

स्यमन्तकमणेर्हर्त्ता नरनारायणात्मकः ।
कुब्जागन्धानुलिप्ताङ्गो मायी परमपूरुषः ॥ ३० ॥

मुष्टिकासुरचाणूरमल्लयुद्धविशारदः ।
संसारवैरी कंसारिर्म्मुरारिर्न्नरकान्तकः ॥ ३१ ॥

अनादिब्रह्मचारी च कृष्णाव्यसनकर्षकः ।
शिशुपालशिरच्छेत्ता दुर्य्योधनकुलान्तकः ॥ ३२ ॥

विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ।
सत्यवाक् सत्यसङ्कल्पः सत्यभामारतो जयी ॥ ३३ ॥

सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ।
जगद्गुरुर्जगन्नाथो वेणुनादविशारदः ॥ ३४ ॥

वृषभासुरविध्वंसी बाणासुरकरान्तकः ।
युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥ ३५ ॥

पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ।
काळीयफणमाणिक्यरञ्जितश्रीपदाम्बुजः ॥ ३६ ॥

दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः ।
नारायणः परं ब्रह्म पन्नगाशनवाहनः ॥ ३७ ॥

जलक्रीडासमासक्तगोपीवस्त्रापहारकः ।
पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः ॥ ३८ ॥

सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः ।
एवं कृष्णस्य देवस्य नाम्नामष्टोत्तरं शतम् ॥ ३९ ॥

कृष्णेन कृष्णभक्तानां गीतं गीतामृतं पुरा ।
स्तोत्रं कृष्णप्रियतमं श्रुतं तस्मान्मया परम् ॥ ४० ॥

कृष्णनामामृतं नाम परमानन्दकारणम् ।
ईतिबाधादिदुःखघ्नं परमायुष्यवर्द्धनम् ॥ ४१ ॥

दानं व्रतं तपस्तीर्थं यत्कृतं त्विह जन्मनि ।
जपतां शृण्वतामेतत् कोटिकोटिगुणं भवेत् ॥ ४२ ॥

पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् ।
धनावहं दरिद्राणां जयेच्छूनां जयावहम् ॥ ४३ ॥

शिशूनां गोकुलानां च पुष्टिदं पूर्णपुण्यदम् ।
बालरोगग्रहादीनां शमनं शान्तिमुक्तिदम् ॥ ४४ ॥

समस्तकामदं सद्यः कोटिजन्माघनाशनम् ।
अन्ते कृष्णस्मरणदं भवतापत्रयापहम् ॥ ४५ ॥

कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुग्मिणीशाय नमो वेदान्तवेदिने ॥ ४६ ॥

इमं मन्त्रं जपन् देवि व्रजंस्तिष्ठन् दिवा निशि ।
सर्वग्रहानुग्रहभाक् सर्वप्रियतमो नरः ॥ ४७ ॥

पुत्रपौत्रैः परिवृतः सर्वसिद्धिसमृद्धिमान् ।
निर्विश्य भोगानन्तेऽपि कृष्णसायुज्यमाप्नुयात् ॥ ४८ ॥

**॥ इति नारदपञ्चरात्रे ज्ञानामृतसारे उमामहेश्वरसंवादे धरणीशेषसंवादे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥**

**॥ श्रीकृष्णार्प्पणमस्तु ॥**

—०—

# श्रीनारायणाष्टोत्तरशतनामस्तोत्रम्

नारायणो नरः शौरिश्चक्रपाणिर्ज्जनार्द्दनः ।
वासुदेवो जगद्योनिर्वामनो ज्ञानपञ्जरः ॥ १ ॥

श्रीवल्लभो जगन्नाथश्चतुर्म्मूर्त्तिश्चतुर्भुजः ।
देवकेशो हृषीकेशः शङ्करो गरुडध्वजः ॥ २ ॥

नारसिंहो महादेवः स्वयम्भूर्भुवनेश्वरः ।
श्रीधरो देवकीपुत्रः पार्त्थसारथिरच्युतः ॥ ३ ॥

शङ्खपाणिः परञ्ज्योतिरात्मज्योतिरचञ्चलः ।
श्रीवत्साङ्कोऽखिलाधारः सर्वलोकपतिः प्रभुः ॥ ४ ॥

त्रिविक्रमस्त्रिकालज्ञस्त्रिधामा करुणाकरः ।
सर्वज्ञः सर्वगः सर्वः सर्वेशः सर्वसाक्षिगः ॥ ५ ॥

हयग्रीवो हरिः शार्ङ्गी हरिकेशो हलायुधः ।
सहस्रबाहुरव्यक्तः सहस्राक्षोऽक्षरोऽव्ययः ॥ ६ ॥

गजेन्द्रघ्नो गजार्त्तिघ्नः केशवः केशिमर्द्दनः ।
कैटभारिरविद्यारिः कामदः कमलेक्षणः ॥ ७ ॥

कंसशत्रुरघारातिः काकुत्स्थः खगवाहनः ।
नीलाम्बुदद्युतिर्न्नित्यो नित्यतृप्तो निराश्रयः ॥ ८ ॥

नित्यानन्दः सुराद्ध्यक्षो निर्विकल्पो निरञ्जनः ।
ब्रह्मसूः पृथिवीनाथः पीतवासाः गुहाश्रयः ॥ ९ ॥

वेदगर्भो विभुर्विष्णुः श्रीमांस्त्रैलोक्यभूषणः ।
यज्ञमूर्त्तिरमेयात्मा वरदो वासवानुजः ॥ १० ॥

जितेन्द्रियो जितक्रोधः समदृष्टिः सनातनः ।
भक्तवश्यो जगत्पूज्यः परमात्माऽसुरान्तकः ॥ ११ ॥

अन्तकः सर्वभूतानामनन्तोऽनन्तविग्रहः ।
मायाधारो निराधारः सर्वाधारो धराधरः ॥ १२ ॥

निष्कलङ्को निराभासो निष्प्रपञ्चो निरामयः ।
भक्तप्रियो महाधारः पुण्यकीर्त्तिः पुरातनः ॥ १३ ॥

इति त्रैलोक्यनाथस्य विष्णोर्न्नाम वरानने ।
अष्टोत्तरशतं दिव्यमशेषेण प्रकीर्त्तितम् ॥ १४ ॥

यः पठेच्छृणुयाद् वाऽपि नित्यमेतत् समाहितः ।
सर्वान् कामानवाप्नोति सर्वयज्ञफलं लभेत् ॥ १५ ॥

सर्वदानेषु यत् पुण्यं सर्वतीर्त्थेषु यत् फलम् ।
तत् फलं समवाप्नोति मयि भक्तिं च दुर्लभाम् ॥ १६ ॥

महापातकयुक्तोऽपि मां ध्यात्वा मधुसूदनम् ।
जपेदष्टोत्तरशतं नाम्नां पापाद् विमुच्यते ॥ १७ ॥

अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ।
अशान्तिः शान्तिमाप्नोति मत्प्रसादान्न संशयः ॥ १८ ॥

भूतवेताळसर्प्पाद्ययक्षगन्धर्वराक्षसाः ।
नश्यन्ति स्मृतिमात्रेण नाम्नामष्टशतस्य वै ॥ १९ ॥

मद्भक्तैर्म्मद्गतप्राणैर्म्मयि सन्न्यस्तबुद्धिभिः ।
स्तोत्रमेतद् विशेषेण पठितव्यं त्रिसन्धिषु ॥ २० ॥

अचलमचलवर्ण्णं वर्ण्णरूपादिहीनं
निखिलनिगमवेद्यं गुह्यमेतं सुसूक्ष्मम् ।
अमलममलसत्त्वा देवि पश्यन्ति ये मां
हृदयकमलमध्ये ते विमुक्ता भवन्ति ॥ २१ ॥

**॥ इति श्रीवराहपुराणे धरणीयज्ञवराहसंवादे**
**नारायणाष्टोत्तरशतनामस्तोत्रम् ॥**

**॥ श्रीकृष्णार्प्पणमस्तु ॥**

—०—

# श्रीनरसिंहाष्टकम्

अस्तु तेजस्वि नोऽधीतमस्तु च ब्रह्मवर्चसम् ।
सम्पादयेम हि सहः सह वीर्य्यं कृषीमहि ॥ १ ॥

स्तम्भं निर्भिद्य निर्य्यन्निखिल-जगदघ-क्षाळनायाव-तीर्ण्णं
पूर्ण्णं स्वर्ण्णोपमान-द्युति-विहत-तमस्तोममस्तारि-वर्ग्गम् ।
स्वस्ति श्रीमत् समस्त-श्रुति-गदितमहो तन्महो नो विदद्ध्यात्
पञ्चास्यं कन्धराया उपरि परि-गतं देव-वृन्दैरमन्दैः ॥ २ ॥

उग्रं व्यग्रेन्द्र-लोकाभयदमरि-दराद्यायुधोदग्र-बाहुं
रुद्रं रुद्रेन्द्र-मुख्यामर-गण-विनुतं भद्र-विज्ञान-मुद्रम् ।
वीरं वीरासन-स्थं भव-भय-हरणं दारणं दारुणानां
रूक्षं त्र्यक्षं महेक्षं क्षपित-दुरितमक्षोभणीयं दिदृक्षे ॥ ३ ॥

ज्वलत्कनक-पिञ्जरं कलित-भक्त-हृत्पञ्जरं
चिरं मुदित-निर्ज्जरं श्रुति-महाटवी-कुञ्जरम् ।
भजे भुवन-बन्धुरं हृदि निजेन्दिरा-मन्दिरं
परं तुरग-कन्धरं दर-धरं नृ-कण्ठीरवम् ॥ ४ ॥

जगन्निधान-पिठरं नृ-हरेर्ज्जठरं नुमः ।
यन्नाभि-कुहरोद्भूतस्तनयो हंस-वाहनः ॥ ५ ॥

यदुत्सङ्गासङ्गा जगदुदय-भङ्गाऽब्धि-तनया
यदुद्गीता गीता विषय-विष-भीतावनकरी ।
सुधी-मुद्रा भद्रा दुरित-गण-विद्रावण-करी
नमस्तस्मै कस्मैचिदमर-पुषे सिंह-वपुषे ॥ ६ ॥

नर-केसरिणं धिक्कृत-हिरण्य-करिणं च सूकरिणम् ।
तोषित-बुध-जन-हरिणं वरिनं दरिणं स्मरामि मन्दरिणम् ॥
॥ ७ ॥

इममाचार्य्य-गोविन्दे सन्निधाय हरिस्तवम् ।
रचयामासतुः प्रेम्णा प्राण-नारायणौ स्वयम् ॥ ८॥

—०—

# तत्ववादप्रमेयमालिका

विष्णुः सर्वोत्तमोऽथाखिलपदगदितः सर्ववेदाभिधेयः
श्रीनाथः सद्गुणाब्धिर्ज्जगदुदयलयाद्यष्टकर्त्ताऽन्तरात्मा ।
ब्रह्माद्या उच्चनीचा हरिचरणरताः पञ्चभेदः प्रपञ्चः
सत्यः स्त्रीपुंसभावः सततमनपगा योग्यता च स्वभावः ।।

जीवास्त्रैगुण्यभाजः परमगतियुजो नित्यबद्धास्तमोगाः
सत्वोद्रेकात्तु मोक्षे निजसुखनियतिः साधनं ज्ञानभक्ती ।
इष्टं दैवं मुकुन्दः परमगुरुरसौ मारुतिर्म्मध्वनामा
विश्वं ताभ्यामुभाभ्यां नियमितमखिलं चेत्ययं तत्ववादः ।।

इमामाचार्य्यगोविन्दो विनेयजनवाञ्छया ।
वितेने तत्ववादस्य प्रमेयनवमालिकाम् ।।

—०—